कुशलाः निपुणाः तेषु पुरुषेष्वेव। लोकस्थितिः लोकमर्यादा । अस्तीति शेषः । त एव लोकव्यवस्थासंस्थापकाः न तूक्तगुणरहिता इत्यर्थः। एवं भूतास्तु विद्वांस एव नत्वन्य इति हृदयम् ॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥ २०

व्या—इत्थं विद्वज्जनाननुवर्ण्य सम्प्रति सत्सङ्गतेश्श्रेयस्करत्वमाह—जाड्यमिति—धियः बुद्धेर्जाड्यं मान्द्यम् । हरति निरस्यति। वाचि वचने । सत्यं सूनृतभावम् । सिञ्चत्याप्लावयति । मानोन्नतिं बहुमानातिशयम् । दिशति प्रयच्छति । पापं किल्बिषमपाकरोति नाशयति । धर्मोपदेशादिनेति भावः। तथा चेतः प्रसादयति निर्मलयति ज्ञानोपदेशादिनेति भावः । दिक्षु दशसु कीर्तिम् । तनोति विस्तारयति । अतस्सत्सङ्गतिस्सज्जनसमागमः । पुंसां किं श्रेयो न करोति कथयेति पृथग्जनसम्बोधनम् । सर्वमपि श्रेयः करोत्येवेत्यर्थः; अतस्तैरेव सङ्गतिः कर्तव्या न तु दुर्जनैरिति तात्पर्यम् ॥

अत्र क्रियाणां बहूनां समुच्चितत्वात्समुच्चयालङ्कारः । 'गुणक्रियायौगपद्यं समुच्चय उदाहृत' इति लक्षणात् ॥

वसन्ततिलकावृत्तं लक्षणं तूक्तम् ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति तेषां यशःकाये जरामरणजं भयम् ॥ २१

व्या—अथैतेषामसाधारणमहिमास्पदत्वाल्लोकोत्तरत्वं वर्णयन्निगमयति—जयन्तीति—सुकृतिनो धन्याः । नि । 'सुकृती पुण्यवान् धन्य' इत्यमरः। रससिद्धाः सिद्धश्शृङ्गारादिरसाः सिद्धपारदघुटिकाश्च * 'वाऽऽहिताग्न्यादिष्वि'ति निष्ठायाः परनिपातः । ते प्रसिद्धाः पूर्वोपवर्णिता वा । कवीश्वराः कविसार्वभौमाः पण्डितोत्तमा इति वा । जयन्ति सर्वोत्कर्षेण वर्तन्ते अद्याऽऽपीति शेषः; यद्वा । रससिद्धाः सिद्धरसाः । ब्रह्मसाक्षात्कारवन्त इत्यर्थः ॥ 'रसो वै सः' इति श्रुतेः ॥

"श्रृङ्गारादौ विषे वीर्ये पारदे ब्रह्मवर्चसे।
रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः—रसः॥"

इत्यभिधानाच्च। कवीश्वराः। कवयः क्रान्तदर्शिनस्तेषामीश्वराः कालत्रयाभिज्ञा ब्रह्मविद्याविशारदा इत्यर्थः। जयन्ति। कुतस्तेषां कवीश्वराणाम्। यशःकाये कीर्तिशरीरे। जरामरणाभ्यां जातम्। इति तथोक्तम्। भयं नास्ति; रससिद्धानां भौतिकशरीर एव जरामरणभयं नास्ति। यशश्शरीरे तु किं वक्तव्यम्। तस्य कल्पान्तस्थायित्वादिति भावः॥

अत्र रससिद्धपदार्थस्य विशेषणगत्या भयाभावपदार्थं प्रति हेतुत्वात्काव्यलिङ्गभेदः। वृत्तमुक्तम्॥

॥ इति नीतिशतके विद्वत्पद्धतिस्सम्पूर्णा॥

---

## ॥ मानशौर्यपद्धतिः॥

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी॥ २२

व्या—अथ विदुषामपि मानशौर्ययोरपेक्षितत्वाद्विद्वत्पद्धतिनिरूपणानन्तरं मानशौर्यपद्धतिं निरूपयति—क्षुत्क्षाम इति—क्षुधा क्षामः क्षीणोऽपि * 'क्षायोम' इति मत्वं, जरया विस्रसया। कृशो जीर्णोऽपि। नि—'विस्रसाजरे'त्यमरः। शिथिलप्रायः विश्लथाङ्गतया बलहीनस्सन्नपीत्यर्थः। कष्टां दशामाहारालाभादतिकृच्छ्रावस्थामापन्नः प्राप्तोऽपि। नि—'दशावर्तावस्थायामि' ति विश्वः। अत एव विपन्नदीधितिर्नष्टकान्तिरपि। किं बहुना प्राणेषु पञ्चसु। नश्यत्सूत्क्रममाणेषु सत्स्वपि। प्राणप्रयासे सम्प्राप्ते सत्यपीत्यर्थः। मत्तेभेन्द्रस्य मत्तगजपुङ्गवस्य। विभिन्नो विदारितो यः कुम्भः कुम्भस्थलं। तत्र यत्पिशितं मेदो मांसं। तद्ग्रासे तत्कबळने। एकं मुख्यं यथा तथा। बद्धा सन्दानिता। स्पृहा वाञ्छा यस्य स इति शौर्यातिशयोक्तिः। तथा मानमहतामभिमानोन्नतानामग्रेसरोऽग्रगण्य

* 'पुरोऽग्रतोऽग्रेषु सर्तेरि'ति टप्रत्ययः । केसरी सिंहः । जीर्णं तृणं घासम् । अत्ति किं अभ्यवहरति किम्? नात्त्येवेत्यर्थः । इति मानातिशयोक्तिः ; नीचजन्तुस्तु नैवमिति भावः ॥

अत्र यद्यपि सर्वत्रापिशब्दस्तावदेकैकविशेषणविशिष्टस्यैवात्यन्तनीचवृत्तिप्रवृत्तिं द्योतयति । तथाऽप्युक्ताखिलविशेषणविशिष्टोऽपि गजेन्द्रमेदःकवलनविहितप्रतिज्ञः केसरी न नीचवस्तुनि प्रवर्तत इति महती मानशौर्यपरकाष्ठोक्तिरिति मन्तव्यम् ॥

"प्राणानपि परित्यज्य मानमेवाभिरक्षयेत् ।
प्राणास्तरङ्गचपला मानमाचन्द्रतारकम् ॥"

इति वचनान्मानशौर्यसम्पन्नेन भवितव्यं यशस्कामेनेति भावः ॥

अत्र प्रकरणे कुत्रचिन्मानस्य कुत्रचिच्छौर्यस्य कुत्रचिदुभयस्य च प्राधान्यकथनमपि द्रष्टव्यम् । कुलक्रमागतोत्तमशीलपरिपालनं मानं सहायमनपेक्ष्य शत्रुसंहरणसामर्थ्यं शौर्यमिति विवेकः ॥

अत्र प्रायेणाप्रस्तुतप्रशंसालङ्कारोऽनुसन्धेयः ॥

शार्दूलविक्रीडितं वृत्तं । लक्षणं तूक्तम् ॥

स्वल्पस्नायुवसावसेकमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनस्सत्त्वानुरूपं फलम् ॥ २३

व्या—क्षुद्रजन्तुस्तु नैवमिति उक्तमेवार्थं भङ्ग्यन्तरेणाह—स्वल्पेति—श्वा शुनकः । स्वल्पयोः लेशमात्रयोः । स्नायुवसयोः । स्नायुर्वस्नसाख्यनाडीभेदः । वसा मेदः । तयोरवसेकेन मेळनेन । मलिनं मलदूषितमपि । नि—'वस्नसा स्नायुः स्त्रियां' । 'हृन्मेदस्तु वपा वसे' त्यमरः । निर्मांसं मांसलेशशून्यमपि । गोः पशोः । नि—

"स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः ॥

अस्थि कीकसं । लब्ध्वा । परितोषमेति सन्तुष्यति । तच्च गवास्थि पु । तस्य शुनः । क्षुधा * 'आपं चैव हलन्तानामि'ति वचनाट्टाप् । तस्याः शान्तये

क्षुन्निवारणाय । न पर्याप्तं न भवतीत्यर्थः । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति भाष्यकारवचनात् । भवन्तीति लटः पूर्वाचार्याणां संज्ञा । नीचजन्तुरिति भावः । सिंहस्तु । अङ्कं समीपमागतमपि । समीपवर्तिनमपीत्यर्थः । नि—'अङ्कस्समीप उत्सङ्गे चिह्ने स्थानापवादयोरि'ति विश्वः । जम्बुकं क्रोष्टारम् । त्यक्त्वा अनादृत्यालक्ष्यीकृत्येति यावत् । द्विपं गजमेव दूरस्थमपीति भावः । निहन्ति विदारयति तथा हि । कृच्छ्रगतोऽप्यतिसङ्कटस्थोऽपि । सर्वोऽशेषो जनः । सत्त्वानुरूपं स्वशक्त्यनुगुणं । फलं लाभं वाञ्छति; न तु दुर्बलः प्रकृष्टफलकाङ्क्षी प्रबलो निकृष्टलाभकाङ्क्षी च भवति; अतः श्वसिंहदृष्टान्तेन नीचानीचवस्तुपरिहारपरिग्रहतत्परेण भवितव्यमायुष्मतेति भावः ॥ वृत्तं पूर्ववत् ॥

लांगूलचालनमधश्चरणावघातं
भूमौ निपत्य वदनोदरदर्शनञ्च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ २४

व्या—अथ क्षुद्रजन्तोश्चेष्टाविशेषमाह । लांगूलेति—श्वा सारमेयः । लांगूलचालनं पुच्छविवर्तनम् । अधः भूतले चरणावघातं पादेन विदारणं च । भूमौ निपत्य स्वयमेव पतित्वा । वदनोदरदर्शनं वक्त्रकुक्षिप्रदर्शनं च । पिण्डदस्य पुरस्तादिति शेषः । कुरुते निजनीचचेष्टामाविष्कुरुत इत्यर्थः । पुमान् गौः पुङ्गवो वृषभः । विशेषणसमासः * 'गोरतद्धितलुकी'ति समासान्तष्टच् । स एव पुङ्गवः श्रेष्ठ इत्यर्थः । नि—'श्रेष्ठोक्षाणौ तु पुङ्गवावि'ति वैजयन्ती । गजपुङ्गवो गजेन्द्रस्तु । धीरं गम्भीरम् । विलोकयति पश्यति । पिण्डदसन्निधाविति भावः । अथ चाटुशतैरनेकप्रियोक्तिभिः । अनूनवाक्यैश्च वा । भुङ्क्ते अभ्यवहरति । गुडतण्डुलादिकमिति शेषः * 'भुजोऽनवने' इत्यात्मनेपदम् । इमावेव नीचानीचजनयोः दृष्टान्ताविति भावः ॥

वसन्ततिलकावृत्तम् - लक्षणं तूक्तम् ॥

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशस्समुन्नतिम् ॥ २५

व्या—अथ मानशौर्यसंपन्नतया वंशवर्धनस्यैव जनस्य सत्तालाभो न त्वन्यस्येत्याह — परिवर्तिनीति — परिवर्तिनि धर्माधर्मवशात्पौनःपुन्येन वा वर्तमाने। संसारे जरामरणरूपे संसारचक्रे । को वा पुमान् । मृतः प्रेतः। न जायते न भवतीत्युत्पन्नो वा न भवतीति शेषः । यद्वा को वा न मृतः को वा न जायते नोत्पद्यते । सर्वोऽप्युत्पन्नो मृतश्च भवत्येवेत्यर्थः। "जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च" तिभगवद्वचनादिति भावः । ततः किमत आह। स पुमान् । जात उत्पन्नो जन्मलाभवानिति यावत् । कोऽसावित्यत आह । येन जातेनोत्पन्नेन पुंसा। वंशोऽन्ववायः समुन्नतिं महोन्नत्यम्। याति प्राप्नोति ; वंशोद्धारको यः पुमान् स एव जन्मलाभवानेवम्भूतत्वं च मानशौर्यसंपन्नस्यैव न त्वन्यस्य । अतः किमन्यैरजागलस्तनवदुत्पन्नैर्मशकवद्विनष्टैश्चेति भावः॥

आनुष्टुभं वृत्तम्॥

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ २६

व्या—इत्थं भूतस्य पुरुषस्य व्यापारमाह । कुसुमेति ॥ कुसुमस्तबकस्येव पुष्पगुच्छस्येवेत्येकं पदम् । मनस्विनो धीरस्य। मानशौर्यशालिनः पुंस इत्यर्थः। द्वयी द्विविधा। वृत्तिर्व्यापारः । 'द्वे गती ही'ति पाठे स्पष्टोऽर्थः । तृतीया तु न सम्भवतीत्यर्थः; किं तद्वृत्तिद्वयमित्यत आह—सर्वलोकस्य सर्वेषां जनानामित्यर्थः। मूर्ध्नि शिरस्युन्नतस्थाने च । स्थीयत एवेति शेषः। अथवा वन एवारण्ये। शीर्यते जीर्यते वा। भावे लट्। एवमुभयी वृत्तिः। शौर्यादुन्नतस्थानस्थितिस्तदलाभे मानादरण्ये जीर्णता वा इति विवेकः । इयमेव पुंसां श्रेयस्करी वृत्तिरिति भावः । कुसुमस्तबकस्येवेत्यत्र समाना श्रौती पूर्णोपमाऽलङ्कारः। इवशब्देन सह समासस्य सम्भवात् । तथा च वार्तिकम् * 'इवेन सह नित्यसमासो विभक्त्यलोपः। पूर्वपदप्रकृतिस्वरत्वं चे'ति। वृत्तं पूर्ववत्॥

सन्त्यन्येऽपि बृहस्पतिप्रभृतयस्सम्भाविताः पञ्चषा-
स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।
द्वावेव ग्रसते दिवाकरनिशाप्राणेश्वरौ भास्वरौ
भ्रातः पर्वणि पश्य दानवपतिश्शीर्षावशेषाकृतिः ॥ २७

व्या—पुनरप्युक्तोभयगुणवैशिष्ट्यस्यैवोत्कृष्टतामाह—सन्तीति—अन्ये वक्ष्यमाणसूर्यचन्द्रापेक्षया इतरे। बृहस्पतिप्रभृतयः बृहस्पतिप्रमुखाः। प्रभृतिशब्देन बुधशुक्रादयोऽपि गृह्यन्ते। पञ्च षड्वा पञ्चषाः ग्रहाः * 'सङ्ख्ययाव्यये' त्यादिना बहुव्रीहिः * 'बहुव्रीहौ सङ्ख्येये डज बहुगणादि' ति समासान्तो डच् प्रत्ययः। सम्भाविताः ग्राह्यत्वेनोपस्थिताः बहुमता वा। सन्ति वर्तन्ते। तान् प्रति बृहस्पतिप्रभृतीन् लक्ष्यीकृत्येत्यर्थः। विशेषेषु विशिष्टेषु तेजोमहत्स्विति यावत्। विक्रमे पराक्रमणे। रुचिः प्रीतिर्यस्य स तथोक्तः। तेजस्विभिस्सहैव कलहाचरणतत्पर इत्यर्थः। एषः उपरागकर्तृत्वेन प्रसिद्धो। राहुः सैंहिकेयः। न वैरायते वैरं न करोति। अलक्ष्यत्वात्तत्कबळनतत्परो न भवतीत्यर्थः * 'शब्द वैर कलहाभ्रकण्वमेघेभ्यः करण' इति क्यङ् * 'अकृत्सार्वधातुकयोर्दीर्घ' इति दीर्घः। विक्रमरुची राहुरित्यत्र * 'रो री'ति रेफलोपे * 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः। किं तु। भास्वरौ तेजस्विनौ * 'स्थेश भास' इत्यादिना वरच्प्रत्ययः। द्वावुभौ। दिवाकरनिशाप्राणेश्वरौ सूर्याचन्द्रमसावेव। अन्ययोगव्यवच्छेदार्थकोऽयमेवकारः। शीर्षमेवावशेषो यस्यास्सा शीर्षावशेषा आकृतिर्यस्य शिरोमात्रावशिष्टगात्र इत्यर्थः। 'शीर्षावशेषीकृत' इति पाठेऽप्ययमेवार्थः परिणमयितव्यः। दानवपतिर्दानवेश्वरः पूर्वोक्तो राहुः। पर्वणि दर्शपौर्णमासीप्रतिपत्सन्धौ। ग्रसति गिळति। हे भ्रातरित्यादरेण पृथग्जनसम्बोधनम्। पश्येत्यत्र वाक्यार्थः कर्म—यतश्शिरोमात्रावशिष्ट एवायमीदृक्कर्माचरणतत्परोऽभूत्सम्पूर्णाङ्गश्चेत्किं करिष्यति न जानामीति भावः; एवं मानशौर्यशालिनो हि निजाङ्गवैकल्यं न परिगणयेयुरिति किं तु महत्कार्यमेव कर्तुं व्यवस्यन्तीति तात्पर्यम्—पुरा किल देवानाममृतप्रदानसमये विष्णुचक्रेण छिन्नशीर्षत्वाच्छिरोमात्रावशिष्टगात्रोऽभूत्सैंहिकेय इति पौराणिकी कथात्रानुसन्धेया। शार्दूलविक्रीडितं वृत्तम्॥

वहति भुवनश्रेणिं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्यते।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह महतां निस्सीमानश्चरित्रविभूतयः॥ २८

व्या—अथ महतां माहात्म्यमाह—वहतीति—शेषः फणाः सहस्रसङ्ख्याकाः स्फाराः फलकानीव तेषु। स्थितां। भुवनश्रेणिं पाताळादिचतुर्दशविष्टपपङ्क्तिं।

वहति धारयति । नि—'स्फटायां तु फणा द्वयो'रित्यमरः । स च शेषः कमठपतिना आदिकूर्मेण* 'पतिस्समास एवे'ति घिसंज्ञायां 'आङोनाऽस्त्रियामि'त्याङो नाभावः । पृष्ठस्य मध्ये मध्येपृष्ठं निजकूर्परोपरिप्रदेश इत्यर्थः * 'पारे मध्ये षष्ट्या वे'त्यव्ययीभावः । तत्सन्नियोगादेदन्तत्वं च मध्यशब्दस्य । सदा निरन्तरम् । धार्यते उह्यते । तमपि कमठपतिमपि । पयोधिः प्रळयार्णवः । अनादरात् अनायासात् । क्रोडाधीनं आदिवराहायत्तं कुरुते । प्रळयकाले पाताळगतभूमण्डलस्यादिवराहावतारेण विष्णुना निजदंष्ट्रया समुद्धृतत्वादिति भावः । अतो महतां मानशौर्यशालिनां महानुभावानां सम्बन्धिन्यश्चरित्रविभूतयो माहात्म्यसम्पदो निस्सीमानो निर्मर्यादा । अवाङ्मानसगोचरा इति यावत् । अहहेत्याश्चर्ये । नि—'अहहेत्यद्भुते खेदे' इत्यमरः ॥ अत्र पूर्वपूर्वस्योत्तरोत्तरगुणोत्कर्षावहत्वान्मालादीपकाख्योलङ्कारः । तदुक्तं विद्यानाथेन ॥

"यदा तु पूर्वपूर्वस्य सम्भवेदुत्तरोत्तरम् ।
प्रत्युत्कर्षावहत्वं तन्मालादीपकमुच्यते । ' इति ॥

हरिणीवृत्तं - लक्षणं तूक्तम् ॥

वरं प्राणोच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ २६

व्या—मानशौर्यशालिन एवोक्तविधमहत्त्वं न तु तद्विहीनस्येति मैनाकं दृष्टान्तीकृत्याह । वरमिति—तुषाराद्रेस्सूनोर्हिमवत्पुत्रस्य मैनाकस्य । उद्गच्छद्भिरुज्जृम्भमाणो । बहुलो भूयिष्ठश्च । यो दहनश्शिलासङ्घर्षणजनितवह्निस्तस्योद्गारैर्निस्सरणैः । गुरुभिः दुस्सहैः । समदेन सदर्पेण । मघवता देवेन्द्रेण । मुक्तस्य प्रयुक्तस्य कुलिशस्य वज्रायुधस्य । प्रहारैर्विदारणैः । प्राणोच्छेदो मरणमित्यर्थः । वरं मनाक्प्रियम् । नि—'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिय' इत्यमरः । कुतः । अहहेति खेदातिशयद्योतनार्थोऽनुकरणशब्दः । पितरि । हिमवति । क्लेशेन वज्रप्रहारजनितदुःखेन । विवशे विह्वले सति । असावयमप्युपलभ्यमानः । पयसां पत्युस्समुद्रस्य; अत्रासमासत्वेन घिसंज्ञाभावात् * 'ख्यत्यात्परस्ये'ति ङसिङसोरादेशात्ति शब्दात्परस्य ङसोऽकारस्य उकारादेशः । पयसि

सलिले सम्पातः प्रवेशः । निजप्राणसंरक्षणार्थं निमज्यावस्थानमित्यर्थः । उचितो- ऽन्याय्यो । न च न भवति हि । अस्यैवेति शेषः । यतो मानशौर्यसम्पन्नस्य पुंसः स्वप्राणमात्रपरित्राणतत्परतया क्वचिन्निलीयावस्थानमेवात्यन्तायशस्करम् । किमुत पितरि क्लेशविवशे ; अतः प्राणपरित्यागेनापि मानशौर्ये एव प्रतिष्ठापनीये । अन्यथा महानपवादस्स्यादिति भावः । अत्रोद्गारशब्दस्य गौणत्वान्नग्राम्यतादोषः ॥ प्रत्युत सौन्दर्यातिशयमेवापादयति । तदुक्तं दण्ड्याचार्यैः ॥

" निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते " ॥

इति पुरा किल भूमण्डलोपद्रवकारिणां पर्वतानां कोपवशात्पक्षच्छेदोद्यते शक्रे भयविह्वलो मैनाकः समुद्रमध्ये निमज्यातिष्ठदिति पौराणिकी कथाऽत्रानु- सन्धेया ॥

शिखरिणी वृत्तम् ॥

यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥ ३०

व्या—अथ मानिनां परनिकारासहनं सदृष्टान्तमाह । यदिति—यद्यस्मा- त्कारणादचेतनः चेतनरहितः निर्जीवोऽपीति यावत् । पाषाणत्वादिति भावः । इनकान्तस्सूर्यकान्तमणिस्सवितुस्सूर्यस्य । पादैः रश्मिभिरङ्घ्रिभिश्च । स्पृष्टः संवलितस्ताडितश्चेति च गम्यते । प्रज्वलति जाज्वल्यमानो भवति । कोपोद्रिक्तश्चेति गम्यते । तत्तस्मात्कारणात् । तेजस्वी तेजश्शाली मानशौर्यसम्पन्नः पुरुषः सचेतन इति शेषः । परैश्शत्रुभिः कृतनिकृतिं विहितापकारं कथं सहते क्षमते । न कथञ्चिदित्यर्थः ; मैनाकस्तु नैवमिति भावः । नि—' पादा रश्म्यङ्घ्रितुर्यांशाः ' इत्यमरः ॥

आर्यावृत्तभेदः ॥

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसां हेतुः ॥ ३१

व्या—विक्रान्तत्वे वयोऽपि न हेतुरिति विनिगमयति । सिंह इति—शिशु- र्बालोऽपि विक्रान्तत्वयोग्यतारहितावस्थोऽपीत्यर्थः । सिंहः । मदमलिनाः

दानपयःपङ्किलाः । कपोलाः भित्तय इव एषां तेषु गजेषु । मातङ्गेषु । निपतति कुम्भस्थलविदारणार्थमिति भावः । इयं बाल्येऽपि विक्रान्तता । सत्त्ववतां बलाढ्यानां । प्रकृतिः स्वभावः । कुतः । वयो बाल्यादि । तेजसां प्रतापशालिनामिति तेजस्तद्वतोरभेदाध्यवसायोऽत्यन्ततेजस्वित्वप्रकाशनार्थकः । हेतुः कारणं । न भवति खलु । 'तेजसां हि न वयः समीक्ष्यते' इति न्यायादिति भावः । 'वयः पक्षिणि बाल्यादावि'त्यमरः । अयमप्यार्यावृत्तभेदः ॥

॥ इति नीतिशतके मानशौर्यपद्धतिः सम्पूर्णा ॥

---

॥ अर्थपद्धतिः ॥

जातिर्यातु रसातलं गुणगणस्तत्राप्यधो गच्छतात्
शीलं शैलतटात्पतत्वभिजनस्सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायास्समस्ता इमे ॥ ३२

व्या—मानशौर्ययोरप्यर्थमूलत्वात् तन्निरूपणानन्तरमर्थपद्धतिं निरूपयति—तत्र प्रथममर्थैकतत्पराणां मतमभिसन्धाय तमाह । जातिरिति—जातिः ब्राह्मणत्वादिः । रसातलं नामाधोलोकम् । यातु गच्छतु नश्यत्वित्यर्थः । गुणगणो धैर्यौदार्यगाम्भीर्यादिगुणसमूहः । तत्रापि रसातलापेक्षयाऽप्यधःपाताललोकम् । गच्छतात् प्राप्नुयात् । शीलं सत्स्वभावः । शैलतटात् । पततु विशीर्णं भवत्वित्यर्थः । अभिजनो वंशः । नि—"अभिजनान्वयौ वंश" इत्यमरः । वह्निना । सन्दह्यतां भस्मीक्रियताम् । वैरिणि संक्षोभकारित्वाच्छत्रुभूते शौर्ये । शूरत्वमूर्ध्नीत्यर्थः । आशु शीघ्रम् । वज्रमशनिर्निपततु । अशनिनिपातेन तदपि विध्वस्तं भवत्वित्यर्थः । एवं पूर्वोक्तजातिकुलोचिताभिमानशौर्यादिनाशेऽप्यस्माकं न किञ्चदपि च्छिन्नमिति भावः । तथाऽपि किं युष्मदभिलषितमित्यत आहुः । नोऽस्माकम् । अर्थः केवलं वित्तमेवास्तु सम्भवत्वयमेवास्माकं परमार्थ इति भावः । ननूत्कर्षावहत्वेन प्रसिद्धानामुक्तगुणानां विध्वंसमङ्गीकृत्य एकेन वित्तेन किं करिष्यथेति नाशङ्कनीयं । यतस्तद्विना तेषामप्यत्यन्ताकिञ्चित्करत्वमेवेत्याहुः । एकेन केवलेन । नि—'एके मुख्यान्यकेवला' इत्यमरः । येन अर्थेन विना * 'पृथग्विने'त्यादिना विकल्पा-

तृतीया । इमे पूर्वोक्ताः । समस्ता अपि गुणाः जातिकुलशीलाभिमानादयस्तृणलवप्रायास्तृणकल्पास्तद्वन्निस्सारा इत्यर्थः । अतो गुणमहत्ताया अप्येतन्मूलकत्वादयमेव सम्पादनीय इति भावः ॥

"धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
अन्तरं नाभिजानामि निर्धनस्य मृतस्य च ॥"

इति लक्ष्मणवाक्यमेव सिद्धान्तीकुर्मः ;

"अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
रक्षितानां व्यये दुःखं धिगर्थं दुःखभाजनम् ॥"

इति मनुस्मरणं स्वशक्तविषयं मन्यामह इति तात्पर्यम् ॥

शार्दूलविक्रीडितं । लक्षणं तूक्तम् ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितस्सश्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥

व्या—ननु तथाऽपि गुणाभावेऽपि केवलवित्तस्याकिञ्चित्करत्वमेवेत्याशङ्क्य तस्यैवाशेषगुणावहत्वं तावदाह । यस्येति—यस्य नरस्य । वित्तमस्ति सम्भवति । स नरः । कुले जातः कुलीनः महाकुलप्रसूतः * 'कुलात्ख' इति खप्रत्ययः । स एव पण्डितो विद्वान् । स एव श्रुतवान् शास्त्रज्ञः । यद्वा । श्रुतं श्रवणं नपुंसके भावे क्तः । तदस्यास्तीति श्रुतवान् धर्मशास्त्राद्याकर्णनचतुरोऽपीत्यर्थः । स एव गुणज्ञो गुणग्राही । अत्र * 'आतोऽनुपसर्गे क' इत्यादिव्याख्यातं प्राक् ; स एव वक्ता वाग्मी स च स एव । दर्शनीयस्सुन्दरश्च । उक्तगुणराहित्येऽपीति भावः । नन्वेवं चेत्पुरुषस्यैकेन वित्तेन ईदृग्गुणसाकल्यसम्पन्नत्वं कुत इत्याशङ्क्याह । सर्वे गुणाः पूर्वोक्तकुलीनत्वादयः । काञ्चनं वित्तमाश्रयन्ति । अतोऽनेनैव सकलगुणसम्पत्तिसम्भवे किमन्यैः प्रत्येकप्रयाससाध्यैरिति भावः ॥

अत्र वित्तस्यैतावद्गुणसम्पादकत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिः ॥

वृत्तमुपजातिः ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिस्सङ्गात्सुतो लालना-
द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।

ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
न्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ १४

व्या—अथ द्वाभ्यामर्थस्य विनाशप्रकारमाह । दौर्मन्त्र्यादिति—नृपतिः राजा । दुष्टो न सुलक्षणप्रयुक्तो मन्त्रः षाड्गुण्यचिन्तनं यस्य तस्य दुर्मन्त्रस्य भावो दौर्मन्त्र्यं तस्माद्धेतोर्नश्यति विनष्टो भवति । मन्त्रवैकल्ये परेषामवकाश-सम्भवात् राज्याद्यपहरणादिति भावः । यद्वा । दुष्टा मन्त्रिणः प्रधानानि यस्य तस्य भावस्तस्मान्नश्यति । अदण्ड्यदण्डनाद्युपदेशेन लक्ष्म्यादिरहितो भवतीत्यर्थः—

"सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीर्मही धर्मयशस्समूहः ।
दुर्मन्त्रिणा नाशयते तथैव लक्ष्मीर्मही धर्मयशस्समूहः ॥"

इति वचनादिति भावः ; यतिर्योगी । सङ्गात्समागमान्नश्यति । सङ्गस्य काम-क्रोधादिहेतुत्वात् । तदुत्पत्तौ भ्रष्टयोगो भवतीत्यर्थः—

"सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ॥"

इति गीतावचनादिति भावः ; सुतो लालनान्नश्यति गुणहीनो भवति ।

"लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः ।
तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥"

इति न्यायादिति भावः ; विप्रो ब्राह्मणोऽनध्ययनात् । नश्यति नीचो भवति ॥

"वेदवेदाङ्गतत्त्वज्ञो विप्रस्सर्वत्र पूज्यते ।
अनधीतश्रुतिर्विप्रः सभामध्ये न शोभते ॥"

इति ; कुलं वंशः । कुतनयात्कुपुत्रान्नश्यति—

"कोटरान्तर्भवो वह्निस्तरुमेव दहिष्यति ।
कुपुत्रस्तु कुले जातः स्वकुलं नाशयेत्परम् ॥"

इति न्यायात् ; शीलं सत्स्वभावः । खलोपासनाद्दुर्जनसमागमान्नश्यति । तेषा-मत्यन्तानर्थमूलकत्वादिति भावः—

"छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थस्सुमहान्भवेत् ॥"

इति वाक्यात् ; ह्रीर्जुगुप्सितकर्माचरणान्निवृत्तिः । मद्यात् मद्यपानान्नश्यति ॥

"अयुक्तं बहुभाषन्ते यत्र कुत्रापि शेरते।
नग्ना विक्षिप्य गात्राणि ते जाल्मा इव मद्यपाः॥"

इत्युक्तत्वात्। कृषिस्सस्यमनवेक्षणान्नश्यति। नित्यमपरामर्शान्नश्यति॥

"कृषिं च पलोमनवेक्ष्य यः पुमानन्यानि कार्याणि समाचरेच्च।
ते त्वेवमेवं च समाकुले द्वे तथेति बाधानिचयं च यातः॥"

इति स्मरणात्; स्नेहः पुत्रदारादिषूत्पन्नो मोहः। प्रवासाश्रयाद्देशान्तरसञ्चार-समाश्रयणान्नश्यति—

"सुताङ्गनाबन्धुषु सोदरेषु नृपेषु भृत्येषु च जातमोहः।
प्रवासमात्रेण हि नश्यतेऽखिलं चिरं प्रवासेन हरत्यशेषम्॥"

इति वचनात्; मैत्री मित्रभावः। अप्रणयादननुरागान्नश्यति—

"मृद्घट इव सुखभेद्यो दुस्सन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघट इव दुर्भेद्यश्चाशु सन्धेयः॥

इति वचनात्। समृद्धिस्सम्पत्तिरनयान्नीतिराहित्यान्नश्यति—

"रक्षायां स्वमतिक्षिपत्यधिकरं शिक्षागुणैर्लभ्यते
विद्वेष्टि स्वजनं त्यजत्यवनतिं बध्नाति मार्गस्थितान्।
भूतिं नेच्छति योजनात्प्रतिभयं दुर्वर्त्मना गच्छति
क्रूराग्रं विनयाङ्कुशं न सहते भूपालमत्तद्विपः॥"

धनं तु त्यागादर्थिसात्करणात्। 'प्रमादादि'ति पाठे। द्यूतादक्षक्रीडायाः। प्रमा-दादनवधानतया वा। नश्यति 'भूमिरिक्षकोऽपलाशैव चार्थासक्तधियां नृणाम्' इति। प्रमादान्नाशस्त्वनुभवसिद्धस्तु अनन्तरश्लोक एव वक्ष्यते। 'शिष्टानां गर्हणान्नाशः सदाचारविवर्जनात्।' शार्दूलविक्रीडितम्॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥ ३५

व्या—अथ वित्तस्योत्तमादिभेदेन त्रैविध्यमाह। दानमिति…दानं सत्पात्र-त्यागः। भोगः स्रक्चन्दनादिद्वारानुभवः। नाशः दानधर्माद्यभावे चोरादिना विलयश्च। तदुक्तम्—

"चत्वारो धनदायादा धर्माग्निनृपतस्कराः ।
तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति सोदराः ॥"

इति एवमुत्तममध्यमाधमभेदेन वित्तस्य । गतयो गमनोपायाः भवन्ति ; तत्र यः पुमान् । न ददाति अर्थिभ्यो न प्रयच्छति वित्तमिति शेषः । अथवा न भुङ्क्ते नानुभवति । तस्य दानभोगाभ्यां वित्तव्ययमकुर्वतः पुरुषस्य सम्बन्धिनो वित्तस्येति शेषः । तृतीया गतिर्नाशावस्था भवति । सा त्वत्यन्तकष्टेत्यर्थः । अयमत्र निष्कृष्टोऽर्थः । वित्तस्य दानेन गतिरुत्तमा । आत्मभोगेन मध्यमा । चोरादिना नाशगतिरधमेति; अतो दानशौण्डेनैव भवितव्यं धनाढ्येनेति भावः ॥ आर्याभेदः ॥

मणिश्शाणोल्लीढः समरविजयी हेतिदळितो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गळितविभवाश्चार्थिषु नराः ॥ ३६

व्या—अथ दानशीलस्य वित्तव्ययजनिततनुत्वमपि शोभावहमेवेत्याह । मणिरिति । शाणश्शस्त्रोत्तेजनसाधनोपलविशेषः । तेनोल्लीढः संघृष्टो । मणिश्च । हेतिदळितः शस्त्रक्षतःसमरविजयी रणशूरश्च * 'जिघृक्षी' त्यादिना इनिः । नि— 'हेतिश्शस्त्रे तु नृस्त्रियो'रिति केशवः । मदेन दानवर्षेण । परिक्षीणः कृशो नागश्च निः—"महाभ्रा हि गजा नागा" इति वैजयन्ती । शरदि शरत्काले- आश्यानानि ईषच्छुष्काणि । पुलिनानि सैकतानि । यस्यास्सा । सरित् नदी च * 'संयोगादेरातोधातोर्यण्वतो' निष्ठानत्वं । कलाशेषः षोडशांसमात्रावशिष्ट श्चन्द्रश्च । नि.—'कळा तु षोडशो भाग' इत्यमरः । 'प्रथमां पिबते वह्नि' रित्यादीतिहासक्रमेणेतरकळानामग्न्यादिदेवैर्निगिळितत्वादिति भावः । सुरतेन रतिरणेन । मृदिता विह्वलीकृता । बालवनिता मुग्धाङ्गना च । 'जारवनिते'ति पाठे वेश्याचोच्यते । तथा । अर्थिषु विषये । गळितविभवा व्यपगतार्थसम्पदः । निश्शेषमर्थिसात्कृतधना इत्यर्थः । नि.—"अर्थं रै विभवा अपी" त्यमरः । नरा दातृजनाश्च । तनिम्ना तनुत्वेनैव * पृथ्वादित्वादिमनिच् । शोभन्ते । एवं- भूततनुत्वस्यैव शोभाहेतुत्वादिति भावः ॥

अत्र प्रस्तुतानां नराणां च सामस्त्येन शोभारूपतुल्यधर्मेणौपम्यस्य गम्यमा- नत्वाद्दीपकालङ्कारः ॥

"प्रस्तुतानां तथाऽन्येषां सामस्त्ये तुल्यधर्मतः ।
औपम्यं गम्यते यत्र दीपकं तन्निगद्यते" ॥

इति लक्षणात् ॥ शिखरिणीवृत्तम् ॥

परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात्सम्पूर्णः कलयति धरित्रीं तृणसमाम् ।
अतश्चानेकान्ता गुरुलघुतयार्थेषु धनिना-
मवस्था वस्तूनि प्रथयति च सङ्कोचयति च ॥ ३७

व्या—अथ पुंसां धनाभावतत्सद्भावसमयावस्थामाह । परिक्षीण इति—कश्चिद्धनिकः पुमान् । परिक्षीणो दैवाद्दरिद्रस्सन् यवानां शितशूकाख्यधान्यानां प्रसृतये स्पृहयति प्रसृतिमात्रयवान् गुरुतया काङ्क्षत इत्यर्थः * 'स्पृहेरीप्सित' इति सम्प्रदानत्वाच्चतुर्थी । नि—'शितशूकयवौ समाचि' त्यमरः । स परिक्षीणः पुमान् । पश्चादनन्तरं । कालान्तर इत्यर्थः । सम्पूर्णो दैववशाद्धनसम्पन्नस्सन् । धरित्रीं भुवम् । तृणसमां तृणकल्पां तद्वल्लघ्वीमित्यर्थः । कलयति मनुते । धनमदेन तथाऽऽलोकयतीत्यर्थः । अतश्चात एव हेतोरर्थेषु यवधरित्र्यादिषु वस्तुषु विषये । गुरुलघुतया महत्त्वाल्पत्वभावेन । अनेकान्ताऽप्रतिनियता । सर्वथा गुरुणि गुरुत्वमेव लघुनि लघुत्वमेवेति नियमाभाववतीत्यर्थः । धनिनां सम्बन्धी व्यवस्था व्यापारः । वस्तूनि यवधरित्र्याद्यल्पमहत्तरवस्तूनि । प्रथयति च धनाभावदशायां नीचमपि वस्तु गुरुकरोतीत्यर्थः । तथा सङ्कोचयति च तत्सद्भावदशायां महदपि वस्तु निराकरोतीत्यर्थः । निर्धनधनिकयोरित्थम्भूताऽवस्था प्रत्यक्षसिद्धा ॥ अतो विवेकिना नैवं विपर्यस्तबुद्धिना भवितव्यमिति भावः ॥

शिखरिणीवृत्तम् - लक्षणं तूक्तम् ॥

राजन् दुधुक्षसि यदि क्षितिधेनुमेतां
तेनाद्य वत्समिव लोकममुं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपुष्यमाणे
नानाफलं फलति कल्पलतेव भूमिः ॥ ३८

व्या—अथ राजानं सम्बोधयंस्तस्यार्थसाधनोपायमतिदिशति—राजन्निति। हे राजन् त्वमिति शेषः। अन्यथा * शेषे प्रथम' इति प्रथमपुरुषः स्यात्। एनामेतां स्वद्धस्तगतामित्यर्थः *अत्रान्वादेशाभावादेनादेशश्चिन्त्यः क्षितिर्धेनुरिवेत्युपमितसमासः। न तु क्षितिरेव धेनुरिति रूपकं। वत्समिवेति स्पष्टोपमालिङ्गात्। तां क्षितिधेनुं। दुधुक्षसि यदि दोग्धुमिच्छसि चेत्। अर्थमिति शेषः * दुहेस्सन्नन्तात् सिप् * दुह्यादेर्द्विकर्मकत्वनियमात्। तर्हि तेन दुधुक्षाहेतुना। अद्येदानीमुपलभ्यमानं। लोकं जनम्। वत्सं तर्णकमिव। नि—'वत्सो नाकुलजे वर्षे तर्णके तनयादिके' इति वैजयन्ती। पुषाण पोषय। नि। 'लोकस्तु भुवने जन' इत्यमरः। वत्सनाशे क्षीरस्येव लोकनाशेऽर्थस्यासम्भवादिति भावः। पोषणफलमाह। तस्मिन् लोके चानिशं सर्वदा। सम्यगसम्बाधं। परिपुष्यमाणे परिपाल्यमाने सति। भूमिः क्षितिः। कल्पलतेव कल्पवृक्षशाखेव। नि—'समे शाखालते' इत्यमरः। यद्वा कल्पयत्यभीप्सितानीति कल्पा। सा च सा लता च * 'स्त्रियाः पुंव' दित्यादिना पुंवद्भावः। सैव कल्पवल्लीव। नानाविधफलं धनधान्यादिबहुरूपफलं। फलति निष्पादयति। 'फलनिष्पत्ताविति' धातोर्लट्। यतो लोकपरिपालनव्यतिरेकेण न तेऽर्थः सम्भविष्यति। तद्द्वारैव भूमेरप्यखिलफलदोग्धृत्वात्। तस्मादशेषलाभार्थं तत्परिपोषणमावश्यकमिति भावः॥

अत्र पूर्ववाक्यस्योपमया निर्व्यूढोत्तरवाक्यस्योपमेत्यनयोरङ्गाङ्गिभावेन सङ्करः॥

वसन्ततिलकावृत्तम्॥

सत्याऽनृता च परुषा प्रियभाषिणी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरीतिः॥ ३९

व्या—यतो राजानं सम्बोधितवानपि तन्नीतिः कीदृशीत्याशङ्कायां तस्या बहुविधत्वमित्याह। सत्येति—सत्या यथार्थभाषिणी। अनृता असत्यवादिनी च। तथा परुषा कठोरभाषिणी। प्रियभाषिणी। मधुरालापिनी च। तथा हिंस्रा घातुका। नि—'शरारुर्घातुको हिंस्र' इत्यमरः। * 'नमि कम्पी'त्यादिना रप्रत्ययः। दयालुरपि कारुणिका च। नि—'स्याद्दयालुः कारुणिक' इत्यमरः * 'स्पृहि गृही'-

त्यार्क्तिा आलुच्प्रत्ययः । तथा अर्थपरा धनलुब्धा । वदान्या दानशौण्डा च कुत्रचिद्विषय इति सर्वत्राप्यध्याहार्यं । नि—'स्युर्वदान्यस्थूललक्षदानशौण्डा-बहुप्रद' इत्यमरः । तथा नित्यं प्रतिदिनं । व्ययो धनत्यागो यस्यास्सा तथोक्ता । प्रचुरनित्यधनागमा । प्रचुरं प्रभूतं यथा तथा । नित्यं । धनस्य । आगमः प्राप्ति-र्यस्यास्सा तथोक्ता च । अतो वाराङ्गना वेश्येव । नि—'वारस्त्री गणिका वेश्ये'-त्यमरः । नृपनीतिः राजवृत्तिः । अनेकरूपा बहुप्रकारा । न त्वैकान्तिकीत्यर्थः ; वाराङ्गनायामपि विशेषणानि समानि ॥

अत्र सत्यानृतेत्यादिपदश्रवणमात्रेण झडिति विरोधः स्फुरति । तस्य स्वाभा-व्येनाभासीकरणादलङ्कारस्सन् । वाराङ्गनेवेत्युपमयाऽङ्गाङ्गिभावेन सङ्कीर्यते ॥ .

आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥

व्या—सोऽपि गुणाढ्य एव समाश्रयणीयो न तु निर्गुण इति राजानमेव सम्बोधयति । आज्ञेति—आज्ञा मर्यादापरिपालनात्मकशासनम् ; कीर्तिर्दान-क्षात्रोद्भवा सत्समाख्या । ब्राह्मणानां पालनं निरुपद्रवं ब्राह्मणसन्तर्पणम् । दानं सत्पात्रे त्यागः । भोगः स्रक्चन्दनादिजनितसुखानुभवः । मित्रसंरक्षणं सुहृत्समु-द्धरणम् । चेत्येते षड्गुणाः । येषां राज्ञाम् । न प्रवृत्ताः न प्रवर्तन्ते । कर्तरि क्तः । पृथिव्या ईश्वरः पार्थिवः तस्य सम्बुद्धिः । हे पार्थिव राजन् । * 'तस्येश्वरः ।' 'सर्वभूमिपृथिवीभ्याम 'णित्यण्प्रत्ययः । येषामुपाश्रयेण समाश्रयेण । कोऽर्थः को लाभः न कोऽपीत्यर्थः ; तस्मादुक्तगुणसम्पन्न एव राजा समाश्रयणीयः । न तु कुक्षिम्भरिरिति भावः ॥

शालिनीवृत्तं । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै 'रिति लक्षणात् ॥

यद्धात्रा निजफालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेपि नितरां मेरौ च नातोऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ४१

व्या—अथातिकार्पण्यं मा कुरु । लाभालाभयोर्दैवायत्तमूलकत्वमित्याह—यदिति—धात्रा ब्रह्मणा । स्तोकमल्पम् । महद्बहुळं वा । यद्धनम् । निजफालं

निजनिटिलतटमेव पट्टं तत्र । लिखितं लेखनेन निर्दिष्टम् । तद्ब्रह्मलिखितं धनम् । मरुस्थले ऊषरदेशेऽपि । वितुलमन्यतोऽपि भावः । नितरामतिशयेन । प्राप्नोति लभते । अन्यूनमिति शेषः । नि—' समानौ मरुधन्वानौ 'वित्यमरः । मेरौ कनकाचलेऽप्यतो ब्रह्मलिखितादधिकम् । न प्राप्नोति । तत्तस्मात्कारणाद्धीरः स्थिरचित्तो । भव । वित्तवत्सु धनाढ्येषु विषये । कृपणां दीनाम् । वृत्तिं व्यापारम् । वृथा व्यर्थम् । माकृथाः माकार्षीस्तेन कार्पण्यजनितनिन्दामात्रा प्रयत्नमेव न त्वधिकधनप्राप्तिरिति भावः । * कृञो लुङिथास् । तनादित्वेऽपि सिचो नित्यलोपविधानान्नसिच् । 'न माङ्योग' इत्यडागमनिषेधः । तत्र दृष्टान्तमाह । कूपेऽल्पजलाधारे गर्तेऽपि । पयोनिधौ समुद्रेऽपि । घटः कलशस्तुल्यमात्मपरिमितम् । जलं गृह्णाति स्वीकुरुते । पश्येति कृपणसम्बोधनं । न तु कूपेऽल्पं पयोनिधावधिकमत एतद्दृष्टान्तेन समाहितचित्तेन भवितव्यम् । न तु कार्पण्यपर्याकुलेनेति तात्पर्यम् ॥

॥ इति नीतिशतके अर्थपद्धतिस्सम्पूर्णा ॥

---

## ॥ दुर्जनपद्धतिः ॥

अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा ।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥

व्या—अथ अर्थादिसम्पन्नोऽपि दुर्जनो नोपादेय एवेत्याशयेनार्थपद्धतिनिरूपणानन्तरं दुर्जनपद्धतिं निरूपयति । तत्र तेषामवगुणं गणयति । अकरुणत्वमिति—परदुःखप्रहाणेच्छा करुणा । तद्राहित्यमकरुणत्वं । दयाहीनत्वं च । अकारणविग्रहो निष्कारणकलहश्च । नि—"अस्त्रियां समरानीकरणाः कलहविग्रहा" वित्यमरः । परधने परद्रव्ये । परयोषिति परदारेषु । स्पृहा च । एकत्रापहरणेच्छा । अन्यत्र सम्भोगाभिलाषश्च । सुजनेषु बन्धुजनेषु च । असहिष्णुता असहनशीलत्वं चेतीदं सर्वं * 'नपुंसकमनपुंसकेने' त्यादिना नपुंसकैकशेषः । दुरात्मनां दुर्जनानां । प्रकृतिसिद्धं स्वभावसिद्धं हि । अतस्ते नोपादेया इति भावः । नि—' प्रकृतिः प्रपञ्चभूते प्रधाने मूलकारणे स्वभाव' इति विश्वः ॥

द्रुतविलम्बितवृत्तं । 'द्रुतविलम्बितमाह नभौ भरा' विति लक्षणात् ॥

दुर्जनः परिहर्तव्यो विद्ययालङ्कृतोऽपि सन्।
मणिना भूषितस्सर्पः किमसौ न भयङ्करः ? ॥ ४३

व्या—आस्तां तावत् दुर्जनमात्रस्य परित्याज्यत्वकथनम्। अशेषावगुणावमार्जकसम्पन्नोऽपि दुर्जनः परित्याज्य एवेति सदृष्टान्तमाह। दुर्जनइति—दुर्जनो विद्यया वेदवेदाङ्गाद्यात्मिकयाऽलङ्कृतो भूषितस्सन्नपि। सकलविद्यापारीणस्सन्नपीत्यर्थः। परिहर्तव्यस्त्याज्यः कुतः इत्यतआह। सर्पः आशीविषः। मणिना फलकस्थमाणिक्येन। भूषितोऽलङ्कृतस्सन्नपि। असौ सर्पो। नभयङ्करः किम्? भयङ्कर एवेत्यर्थः। अतो मणिभूषितसर्पप्रायो विद्यावानपि दुर्जन दूरतस्त्याज्य एव। "दुर्जनं दूरतस्त्यजे"दिति न्यायादिति भावः * 'मेघर्तिभयेषु कृञ' इति खश्। खशि 'अरुर्द्विष दि' त्यादिना मुमागमः॥

अत्र बिम्बप्रतिबिम्बन्यायेन धर्मधर्मिणोर्वाक्यद्वये पृथङ्निर्देशाद्दृष्टान्तालङ्कारः—

"बिम्बानुबिम्बन्यायेन निर्देशो धर्मधर्मिणोः।
दृष्टान्तालङ्कृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रया॥"

इति लक्षणात्। वृत्तमानुष्टुभम्॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि।
तेजस्विन्यवलिप्तता मुखरता वक्तव्यशक्तिस्थिरे
तत्को नाम गुणो भवेत्सगुणिनां यो दुर्जनैर्नाङ्कितः॥ ४४

व्या—अथास्य सर्वदूषकत्वमाह। जाड्यमिति—ह्रीमति लज्जावति पुंसि। जाड्यं मान्द्यं * 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति ष्यञ् प्रत्ययः। गण्यते संख्यायते। दुर्जनैरिति शेषः। न तु जुगुप्सितकर्माचरणपराङ्मुखत्वम्। व्रतैस्तपश्चान्द्रायणादिनियमैः। शुचौ शुद्धे। दम्भो धर्मध्वजत्वम् गण्यते। न त्वनुष्ठातृत्वम्। शुचौ स्वभावादेव बाह्यान्तरशुद्धे। कैतवं कपटं। गण्यते। न तु पारमार्थिकत्वं शूरे। निर्घृणता दयाराहित्यं। गण्यते। न तु विक्रान्तत्वं मुनौ मननशीले विमतिता बुद्धिहैन्यं गण्यते न त्वात्मैक्यानुसन्धान-

तत्परत्वं प्रियालापिनि मधुरवादिनि। दैन्यं गण्यते। न तु श्रवणानन्दकरत्वं। तेजः प्रागल्भ्यं। प्रभाविशेषो वा तद्व्यवलिप्तता गर्वग्रस्तत्वं । गण्यते । न तु स्वभावः। नि—'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि चे'ति विश्वः । वक्तव्य-ष्वर्थेषु । शक्तिः प्रतिभापरपर्यायस्सामर्थ्यविशेषः । तया स्थिरे । मुख-मस्यास्तीति मुखरो दुर्मुखः । नि—'दुर्मुखे मुखराबद्धमुखा वि'त्यमरः * 'खमुख कुञ्जेभ्यश्चे'ति रप्रत्ययः । तस्य भावस्तत्ता असम्बद्धप्रलापित्व-मित्यर्थः। गण्यते। न तु वाग्मित्वं । तस्मात्कारणात् । गुणिनां गुणसम्पन्नानां-स को नाम गुणो भवेत्। यो गुणः । दुर्जनैर्नाङ्कितः न दूषितः । दुर्जनादूषितो गुणस्सुगुणिनां न कोऽप्यस्तीत्यर्थः । 'यो दुर्जनानां मत' इति पाठे यो गुणः दुर्जनानां मतः इष्टः स्यात् स को नाम भवेदिति सम्बन्धः। दुर्जनाभिमतो गुणस्तु गुणिनां न कोऽप्यस्तीत्यर्थः॥

शार्दूलविक्रीडितं वृत्तं। लक्षणं तूक्तम्॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्?।
सौजन्यं यदि किं बलेन महिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना? ॥ ४५

व्या—अथ गुणावगुणप्रणालिकामाह। लोभ इति—लोभो धनादिवाञ्छा-ऽस्ति चेदगुणेन दुर्गुणेन किं? न किञ्चिदपीत्यर्थः । तस्यैवात्यन्तनिन्दावहत्वादिति भावः। पिशुनता परोक्षे परदोषसूचकता। अस्ति यदि। पातकैर्ब्रह्महत्यादिभिः किं? तस्या एव निरयपातनदक्षत्वादिति भावः। सत्यं यथार्थभाषणं समदर्शित्वं वाऽस्ति चेत्तपसा चान्द्रायणादिना किं? तस्यैव परिशोधकत्वादिति भावः। शुचि द्रोह-चिन्तादिराहित्येन शुद्धम्। मनोऽस्ति यदि । तीर्थेन प्रयागादिना किं तस्यैवा-पवर्गमूलकत्वादिति भावः—

"यस्त्वात्मतीर्थं भजते विनिष्क्रियस्य
सर्ववित्सर्वगतोऽमृतो भवेत्॥"

इति स्मरणमत्र मूलम्। सौजन्यं सुजनभावोऽस्ति यदि । बलेन परिजनेन किं? तस्यैवाशेषकार्यनिर्वाहकत्वादिति भावः। महिमा माहात्म्यमस्ति यदि । मण्डनैः

कुण्डलहाराद्यलङ्करणैः किं? तस्यैवोपस्कारहेतुभूतत्वादिति भावः। अपयशः अपकीर्तिरस्ति यदि मृत्युना मरणेन किं? तद्वत् मृतप्रायत्वादिति भावः। एवं विचार्य सद्गुणार्जनतत्परेण भवितव्यं निपुणेन। अन्यथा दौर्जन्यमनायाससाध्यमिति वाक्यशेषत्वेनोन्नेयम्॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतिस्सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥ ३६

व्या—कस्यचिदनुभविनो निजकष्टाभिवेदनमभिनीयाह—शशीति। दिवसेऽह्नि। धूसरो निस्तेजस्कः। शशी चन्द्रश्च। गलितयौवना भ्रष्टनूतनवयस्का। कामिनी कान्ता च। विगतवारिजं पुण्डरीकषण्डहीनम्। सरः कासारश्च। शोभना आकृतिर्यस्य सुन्दरपुरुषस्य। अनक्षरं शास्त्रविभ्रष्टं मुखं च। धनपरायणो। धनलुब्धः। प्रभुः राजा च। सततदुर्गतिः निरन्तरदारिद्र्यवान्। सज्जनश्च नृपाङ्गणगतो राजगृहान्तरवर्ती। खलो दुर्जनश्च। तस्य विघातुकत्वादिति भावः; इत्येवं सप्त शल्यानि शूलानि। तथा दुस्सहदुःखजनकत्वादिति भावः; इदमेवात्यन्तकष्टनिवेदनवचनमिति तात्पर्यम्॥

अत्राप्रकृतानां प्रकृतस्य खलस्य च दुःखहेतुत्वसाम्येनौपम्यस्य गम्यमानत्वाद्दीपकालङ्कारः। लक्षणं तूक्तम्॥

वृत्तमिदं पृथ्वीवृत्तम्॥

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम्।
होतारमपि जुह्वानं स्पृष्टो दहति पावकः॥ ३७

व्या—अथ दुष्टराजलक्षणं सदृष्टान्तमाह—चण्डकोपानां उग्रक्रोधानां। भूभुजां राज्ञां। कश्चिदपि पुमान्। आत्मीयो नाम आत्मीयत्वेन प्रसिद्धः। न भवति। किं तु सर्वोऽप्यनात्मीय एवेत्यर्थः; ननु यथा कथंचिद्धितमाचरन्भविष्यत्येव आत्मीय इत्याशङ्क्य दृष्टान्तमुखेन निराकुर्वन्नाह—जुह्वानमाज्यपुरोडाशादिदानेनोपचरन्तमपि * 'हु दानादनयो'रिति धातोः कर्तरि शानच्।

होतारं यजमानं। पावकोऽग्निः। स्पृष्टस्सन् दहति सन्तापयतीत्यर्थः; अतोऽग्निदृष्टान्तेनेदृशो राजा न समाश्रयणीय इति भावः॥

मौनान्मूकः प्रवचनपटुर्वाचको जल्पको वा
धृष्टः पार्श्वे भवति च वसन् दूरतोऽप्यप्रगल्भः।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ ४८

व्या—कथं न समाश्रयणीय इत्याशङ्क्य तत्सेवाया दुष्करत्वादित्याह—मौनादिति॥ मौनात्तूष्णींभावान्मूको निर्वचो भवति सेवक इति शेषः। प्रवचनपटुः प्रगल्भश्चातिवक्ता। वाचको बहुभाषी। जल्पतीति जल्पकोऽसम्बद्धप्रलापी भवति। उभयत्रापि * 'ण्वुल् तृचा'विति कर्तरि ण्वुल्प्रत्ययः। णित्वाद्वृद्धिः। 'जल्पक' इति पाठे जल्पतीति जल्पकः। पचाद्यच् स्वार्थे कप्रत्ययः। अन्यथा * 'जल्पभिक्षे'त्यादिना षाकन्प्रत्यये जल्पाक इति स्यात्। यदाहामरसिंहः। नि। 'स्याज्जल्पाकस्तु वाचाल' इति। पार्श्वे समीपे च। वसन् धृष्टो निर्भीको भवति। दूरतो विप्रकृष्टदेशे। वसन्। अप्रगल्भः अप्रौढो भवति। क्षान्त्या परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धलक्षणयोपलक्षितश्चेद्भीरुर्भयशीलो भवति * 'भियः क्रुक्लुकनावि'ति क्रुप्रत्ययः॥ न सहते परिभवादिकं न क्षमते। यदि तर्हि। प्रायशो बाहुल्येन। अभिजातस्सत्कुलीनो न भवति। अतः परमगहनोऽत्यन्तदुरवगाहः। सेवाधर्मः परिचर्यात्मकं कर्म योगिनामपि कालत्रयज्ञानामप्यतीन्द्रियवस्तुपरिज्ञानवतामित्यर्थः। किमुतान्येषामिति भावः। अगम्यो ज्ञातुमशक्यः। सर्वे गत्यर्थाः ज्ञानार्थाः। यतः परब्रह्माऽपि ध्यानादिना साक्षात्क्रियते न त्वयमिति भावः; । मौनादिव्यतिरिक्तधर्मस्य गगनारविन्दप्रायत्वात्तस्य ब्रह्मणोऽपि दुर्विज्ञेयतयाऽत्यन्तदुष्करत्वमिति तात्पर्यम्॥

अत्र सेवाधर्मस्य योगिगम्यत्वेऽप्यगम्यत्वोक्तेस्सम्बन्धे असम्बन्धरूपातिशयोक्तिः। मन्दाक्रान्तावृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चे'ति लक्षणात्॥

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्रोद्गाढविस्मृतनिजाधमकर्मवृत्तेः।

दैवादवाप्तविभवस्य गुणद्विषोऽस्य

नीचस्य गोचरगतैः सुखमास्यते कैः ? ॥ ४९

व्या—किं बहुनाऽस्य पुरस्तान्न केनचित् स्थातुमपि शक्यत इत्याह । उद्भासितेति—उद्भासिताः प्रकाशिताः । अखिलाः खलाः येन तस्य अधिकारप्रदानेन पुरस्कृताशेषदुर्जनस्येत्यर्थः । तस्य सुजनविद्वेषित्वादिति भावः । तथा । विशृङ्खलस्य विधिनिषेधातीततया स्वच्छन्दगतेरित्यर्थः । तथा । प्रोद्गाढमतितरां विस्मृता स्मरणाविषयीकृता । निजा स्वकीया । अधमकर्मवृत्तिः प्राक्तननीचकृत्यव्यापारो । येन तस्य 'प्रागेव विस्मृते'ति पाठे प्राक् प्रथमम् आचरणसमय एवेत्यर्थः ॥ एतेन लज्जाहैन्यमुक्तं । तथा । दैवाददृष्टवशादिदानीमवाप्तः प्राप्तो विभवः ऐश्वर्यं सम्पत्तिर्यस्य गुणद्विषस्सुगुणनिन्दकस्यास्य पूर्वोक्तस्य नीचस्य राज्ञः । गोचरगतैः विषयवासिभिः । कैर्जनैस्सुखमक्लेशेन । आस्यते स्थीयते । न कैरपीत्यर्थः । अतो न नीचाश्रयः कर्तव्य इति भावः * 'आस उपवेशने'। भावे लट् ॥

अत्रोद्भासितेत्यादिपदार्थस्य विशेषणगत्या सुखस्थित्यभावपदार्थहेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥

वसन्ततिलकावृत्तम् ॥

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमुपैति पश्चात् ।

दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥

व्या—अथ दुर्जनसुजनमैत्रीप्रकारमाह—आरम्भेति । पूर्वार्धपरार्धाभ्यां पूर्वाह्णापराह्णभेदेन । भिन्ना पृथग्विधा । छाया अनातप इव । नि—"छाया त्वानातपे कान्तौ प्रतिबिम्बार्कजाययो" रिति वैजयन्ती । आरम्भे प्रारम्भसमये । गुर्वी गुरुः वर्धिष्णुरित्यर्थः * 'वोतो गुणवचना' दिति विकल्पात् ङीष् । क्रमेण कालक्रमेण । क्षयिणी क्षयिष्णुश्च । 'जिदृक्षी' त्यादिना इनिः । तथा । पुरा प्रारम्भे । लघ्वी लघुः ह्रस्वेत्यर्थः । पूर्ववत् ङीष् । पश्चादनन्तरम् । वृद्धिमुपैति प्राप्नोतीति भावः—अयमर्थः—दुर्जनमैत्री पूर्वाह्णच्छायेव प्रारम्भगुर्वी क्रमेण क्षयिणी च भवति । सुजनमैत्री तावदपराह्णच्छायेवादौ लघ्वी ततो वर्धिष्णुश्च भवतीति । अतोऽत्र यद्युक्तं तत्कर्तव्यं कुशलेनेति भावः ॥

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणमेव वैरिणो जगति ॥ ५१

व्या—यदुक्तमकरुणत्वमकारणविग्रह इति तदेव प्रकटयन्नुपसंहरति—मृगेति । सन्तोषो दैववशाल्लब्धेन मनसस्सन्तुष्टिः । तृणजलसन्तोषैर्विहिता कल्पिता । वृत्तिर्जीवनं । येषां तेषां । न तु परोपतापोपजीविनामित्यर्थः । नि—'वृत्तिर्वर्तनजीवन' इत्यमरः । मृगाणां हरिणादीनां । मीनानां मत्स्यानां । सज्जनानां साधूनां च । लुब्धको व्याधः । धीवरो दाशः । जालिक इत्यर्थः । पिशुनस्सूचकश्च । नि—'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः ।' 'कैवर्ते दाशधीवरावि' ति चामरः । एते । जगति भुवि । निष्कारणं निर्हेतुकमेव । वैरिणो विद्वेषिणः बाधुका इत्यर्थः ॥

तृणेन विहितवृत्तीनां मृगाणां लुब्धका निष्कारणवैरिण इत्यादि यथाक्रममन्वयात्क्रमापरनामा यथासङ्ख्यालङ्कारः । तदुक्तं विद्यानाथेन ॥

"उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम् ।
अनूद्देशो भवेद्यत्र तद्यथासङ्ख्यमुच्यते ॥" इति

आर्यावृत्तम् ॥

॥ इति नीतिशतके दुर्जनपद्धतिः सम्पूर्णा ॥

---

## ॥ सुजनपद्धतिः ॥

वाञ्छा सज्जनसङ्गतौ परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिश्शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलै-
रेते येषु वसन्ति निर्मलगुणास्तेभ्यो नमः कुर्महे ॥ ५२

व्या—अथैतद्वैलक्षण्येन सुजनपद्धतिं निरूपयति । तत्रादावादरातिशयात्तान्नमस्करोति । वाञ्छेति—सज्जनसङ्गतौ साधुसमागमे । वाञ्छा अभिलाषः । न तु जिहासा । तस्य मोक्षसाधकत्वादिति भावः । तदुक्तं ज्ञानवासिष्ठे—

"मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः।
शमो विचारस्सन्तोषश्चतुर्थस्साधुसङ्गमः॥"

इति। तथा चोक्तं श्रीमद्भागवते। 'महत्सेवां द्वारमाहुर्विमुक्ते' रिति स्वेनाप्युक्तम्—

"चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥"

इति। परेषां गुणे। प्रीतिस्सन्तोषः। न तु दोषापादनम्—

"परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तस्सन्ति सन्तः कियन्तः॥"

इति वक्ष्यमाणत्वादपीति भावः। गुरौ विद्योपदेष्टरि। नम्रता भक्तिश्रद्धाभरेण प्रह्वीभावः। न तु गर्वोद्रिक्तता—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते निखिला ह्यर्थाः प्रकाशन्ते महात्मनः॥"

"गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो जनार्दनः।
गुरुस्साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥"

इति श्रुतिस्मृती। विद्यायां वेदान्तादिविद्याभ्यासे। व्यसनमासक्तिः—न तु द्यूतकेल्यादौ। तस्य मोक्षसाधनब्रह्मज्ञानजनकत्वादिति भावः। स्वयोषिति निजदारेषु। रतिस्सम्भोगः। न तु परदारेषु। "रम्यं कुलस्त्रीरत" मिति भावः। लोकापवादात् लोकनिन्दायाः – 'भीत्रार्थानां भयहेतु' रित्यपादानत्वात्पञ्चमी। भयं न तु निर्लज्जत्वम् * 'लोकापवादो बलवानिति सत्यवती श्रुति' रित्यादिवचनात्तस्य बलिष्ठत्वादिति भावः। शूलिनि परदेवतायां भगवति भक्तिरनुरागः न तु क्षुद्रदेवतायां 'शिवे भक्तिश्शिवे भक्ति' रित्यादि वचनेष्वावृत्त्या तस्याः प्राशस्त्यश्रवणादिति भावः। आत्मदमने स्वपरिभवे सति। शक्तिस्सामर्थ्यं पराक्रम इति यावत्। न तूपशमेनौदासीन्यम्—

"अन्यदा भूषणं पुंसां शमो लज्जेव योषिताम्।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव॥"

इति वचनादिति भावः। खलैर्दुर्जनैस्सह संसर्गमुक्तिस्सङ्गत्यागः। न तु सत्सहवासाभिलाषः * 'दुर्जनं दूरतस्त्यजे' दिति। 'दुर्जनः परिहर्तव्य' इत्यादि-

वचनादिति भावः । इत्येते । निर्मलाः निष्कलङ्काः । गुणस्सज्जनसङ्गतिवाञ्छा-द्यो । येषु पुरुषेषु वसन्ति । तेभ्यो महद्भ्यो नमः । इत्थं भूतगुणविशिष्टानामेव नमस्कारार्हत्वादिति भावः * 'नमस्स्वस्ती' त्यादिना चतुर्थी ; 'तैरेव भूर्भूषिते' ति पाठे तैर्निर्मलगुणसम्पन्नैरेव भूरलंकृता न त्वन्यैस्तेषामेव चारुत्वाद्यतिशय-हेतुत्वादिति भावः ॥

शार्दूलविक्रीडितम् ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

व्या—अथैषां निसर्गसिद्धगुणं गणयति । विपदीति—विपद्यापत्काले । धैर्यं निर्विकारचित्तत्वं । न तु दैन्यं । 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुष्वि' ति । अथानन्तरं वाक्यारम्भे वा । अभ्युदये सम्पदि । क्षमा सहिष्णुत्वं । न तूचण्डता । सदसि राजविद्वत्सभायां वाक्पटुता वाग्मित्वं । सरसवचन-रचनाचातुर्यमिति यावत् । न तु मूकभावः । युधि रणरङ्गे । विक्रमः पराक्रमो । न तु पलायनम् । यशस्यभिरतिः सङ्ग्रहेच्छा । न त्वनादरः । श्रुतौ वेदशास्त्रा-भ्यसने । व्यसनमासक्तिर्न तु निर्वेदः इतीदं सर्वं * 'नपुंसकमनपुंसकेने' त्यादिना नपुंसकैकशेषः । महात्मनां महानुभावानां । प्रकृतिसिद्धं स्वभावसिद्धं हि । नि—'संसिद्धिप्रकृती समे' 'स्वरूपं च स्वभावश्च निसर्गश्चे'त्यमरः । द्रुत-विलम्बितवृत्तम् । लक्षणं तूक्तम् ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ५४

व्या—अथैषां प्रसिद्धविलक्षणमण्डनसम्पत्तिमाह । कर इति—करे हस्ते । श्लाघ्यस्सकललोकप्रशस्तस्त्यागो दानम् । मण्डनं । न तु कङ्कणं । 'दानेन पाणिर्न तु कङ्कणेने'ति स्वेनैवाग्रे वक्ष्यमाणत्वात् । शिरसि गुरुपादयोः । प्रणयिता अभिवादनतात्पर्यम् । मण्डनं । न तु मणिहिरण्मयकोटीरादिः । मुखे वक्त्रे । सत्या वाणी सूनृतभाषणम् । मण्डनं । न तु ताम्बूलचर्वणादि । भुजयोरतुलं

निरुपमानम् । विजयि जयशीलं च * 'जिदृक्षी' त्यादिना इनिः । वीर्यं बलम् । मण्डनं । न तु केयूरादि । हृद्यन्तरङ्गे । स्वच्छा वृत्तिः निष्कळङ्कव्यापारो मण्डनं । न तु हाररुचकादि । हृच्छब्दस्य वक्षस्स्थलवाचकत्वमपि सम्भवतीति कृत्वा अभेदेन निर्देशः । श्रवणयोः । कर्णयोरधिगतं श्रुतं शास्त्रमेव । नि—'श्रुतं शास्त्रावधृतयो' रिति विश्वः । मण्डनं । न तु कुण्डले । 'श्रोत्रं श्रुतेनैव न कुण्डलेने'ति वक्ष्यति । इदं पूर्वोक्तदानादिकं सर्वमैश्वर्येण धनरत्नसम्पत्त्या । विनापि * 'पृथग्विने' त्यादिना विकल्पात्तृतीया । प्रकृत्या स्वभावेन । महतां महात्मनां । सौजन्यसम्पन्नानामित्यर्थः * 'प्रकृत्यादिभ्यस्तृतीये' ति तृतीयासमासः । मण्डनं भूषणं तस्यैव लोकोत्तररामणीयकादिहेतुत्वादिति भावः ॥

शिखरिणीवृत्तम् ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यं सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥५५

व्या—गुणाढ्यत्वे को लाभ इत्याशङ्क्य तेषां श्रेयोहेतुत्वमाह । प्राणेति—प्राणाघातात्प्राणहिंसायाः । निवृत्तिर्निवर्तनं च । 'माहिंस्यात्सर्वाभूतानि'। 'अहिंसा परमो धर्मस्त्वधर्मः प्राणिनां वध' इत्यादिनाऽग्नीषोमीयपश्वालम्भनवृत्त्यतिरिक्तहिंसाया निषेधश्रवणात् । परधनहरणे संयमो मनोरोधश्च "परद्रव्याणि लोष्टव'दिति न्यायादिति भावः । काले समये सत्यवाक्यं यथार्थभाषणं च । तथा धर्मोपदेशश्रवणादिति भावः । अत्र 'ब्राह्मणार्थे गवामर्थे' इत्यादिष्वसत्यवचनस्यापि निषेधाभावश्रवणात्काल इत्युक्तम् । शक्त्या प्रदानं वित्तानुसारेण त्यागश्च । ''वित्तशाठ्यं न कारये'दिति वचनादिति भावः । युवतिजनकथायां 'परस्त्रीवृत्तान्तकथने । मूकभावस्तूष्णींभावशीलत्वं च । 'स्वप्नेऽप्यन्यवधूकथा'मिति वचनात् । परेषामन्येषां । याचकानामित्यर्थः तृष्णा धनलिप्सा । तस्या एव । स्रोतसः प्रवाहस्य । विभङ्गो निरोधः । अभीप्सितदानेन मनोरथपरिपूरणं चेत्यर्थः—

"याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥"

इति श्रवणादिति भावः। गुरुषु विषये। नम्रत्वं च। 'गुरौ नम्रते' त्युक्तत्वादिति भावः। सर्वभूतेष्वशेषप्राणिष्वनुकम्पया दयया सामान्यं समदर्शित्वं च। सर्वशास्त्रेषु वेदवेदान्तादिसकलागमेष्वनुपहतः अविच्छिन्नः। विधिरध्ययनविधानं च। यद्वा 'सर्वभूतानुकम्पे'ति पृथक्पदम्। तथा सर्वशास्त्रेषु सामान्यमवैषम्येण तत्तत्सिद्धान्तानुवर्तित्वम्। अनुपहतविधिरलुप्तकर्मानुष्ठानं चेत्येष गुणसमुदायः। श्रेयसां पन्था अखण्डितैश्वर्यादिश्रेयः प्राप्तिमार्गः। न त्वेतद्व्यतिरिक्तोऽन्योऽस्तीत्यर्थः; एतादृशगुणसम्पत्तिस्सुजनानामेवेति कृत्वा त एव श्लाघ्या इति भावः; अथवा श्रेयसां प्रशस्यानां सुजनानां सम्बन्धी। पन्था तत्प्रवृत्तिमार्ग इत्यर्थः। प्रशस्यशब्दादीयसुनि * 'प्रशस्यस्य श्र इति आदेशः। अत्र 'वाञ्छासज्जनसङ्गता' वित्यादिश्लोकेषूक्तगुणाः। प्रायेण॥ दैवसम्पत्। अभिजातानामेव सम्भवति न त्वन्येषां। तदुक्तं भगवद्गीतासु—

"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥
अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम्।
दया भूतेष्वलोलत्वं मार्दवं ह्रीरचापलम्॥
तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता।
वदन्ति सम्पदं दैवीमभिजातस्य भारत॥" इति॥

इति लक्षणात्॥

सम्पत्सु महतां चित्तं भवेदुत्पलकोमलम्।
आपत्सु च महाशैलं शिलासङ्घातकर्कशम्॥ ५६

व्या—अथापत्सम्पदोस्सुजनमनोवृत्तिमाह। सम्पत्स्विति—सम्पत्सु धनधान्यवस्तुवाहनादिसमृद्धिषु। महतां महात्मनां सज्जनानां चित्तमुत्पलवत्कोमलं मृदुलं भवेत्। न तु कठिनमित्यर्थः। आपत्सु दारिद्र्याद्यनर्थसङ्कटेषु। महाशैलशिलासङ्घातः पाषाणकूटः। तद्वत्कर्कशं कठोरं च भवेत्। न त्वधैर्यविश्लथमित्यर्थः। न कदाऽप्युक्तवैपरीत्यमन्यथा माहात्म्यभङ्गप्रसङ्गादिति भावः। विवेकिनामविवेकिनां चायमेव पन्थाः आदरणीय इति तात्पर्यम्; अत्र शैलस्य महत्त्वविशेषणं तच्छिलासङ्घातस्यात्यन्तदुर्भेद्यत्वद्योतनार्थम्। उक्तं चैतदन्यत्रापि।

"सौजन्यामृतसिन्धवः परहितप्रारब्धवीरव्रता
वाचालाः परवर्णने निजगुणालापे तु मौनव्रताः।
आपत्स्वप्यविलुप्तधैर्यनिलयास्सम्पत्स्वनुत्सेकिनो
माभूवन् खलवक्त्रनिर्गतविषम्लानाननास्सज्जनाः॥"

इति उपमालङ्कारः॥

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः।
विपद्युच्चैर्धैर्यं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥ २७

व्या—अथ द्वाभ्यामेव सद्वृत्तस्यासाधारण्यमाह। प्रियेति। न्यायदनपेता न्याय्या नीतिप्रवणा वृत्तिर्जीवनं—नि—'वृत्तिर्वर्तनजीवन' इत्यमरः। प्रीणातीति प्रिया इष्टा न त्वन्या। तस्या एव श्रेयस्करत्वादिति भावः * 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। असुभङ्गेऽपि प्राणप्रयासेऽपि किमुतान्यदेति भावः। मलिनं दुष्कर्म असुकरमकर्तव्यं। न 'त्वापत्काले नास्ति मर्यादे'ति न्यायात्सुकरं। तस्यैवैहिकामुष्मिकफलदत्वादिति भावः * 'ईषद्दुरि'त्यादिना खल् प्रत्ययः। ततो नञ् समासः। असन्तः कुहकास्तु। नाभ्यर्थ्याः कस्मिंश्चिद्विषयेऽपि न प्रार्थनीयाः। किन्तु सन्त एव। तेषामुपेक्ष्यत्वादिति भावः। यद्यपि * 'न पादादौ खल्वादय' इत्याह वामनः। तथाऽपि कविप्रौढ्या तु शब्दस्य पादादौ प्रयोगः। सुहृदपि प्राणप्रियबन्धुरपि किमुतान्य इति भावः * 'सुहृद्दुर्हृदौ मित्रामित्रयो' रिति निपातनात्साधुः। कृशधनः धनहीनश्चेत्। न याच्यः याचितुं न योग्यः। धनादिकमिति शेषः। किन्तु धनपरिपूर्ण एव। तथाविधयाच्ञाया अनुचितत्वादिति भावः। विपद्यनर्थसङ्कटेऽप्युच्चैः धैर्यं महाधैर्यं न तु भयविह्वलत्वं 'आपत्स्वप्यविलुप्तधैर्यनिलयाः' 'विपदि धैर्यमथाभ्युदये क्षमे'ति चोक्तत्वादिति भावः। महतां पूज्यानामनुविधेयमनुकूलं। पदं व्यवसितं च। न त्वननुकूलं पदम्। तथाभूतस्यैव श्लाघ्यत्वादिति भावः। नि—'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि'त्यभिधानात्। इतीदमेतत्। विषममसाधारणतया दुष्करमसिधाराव्रतमस्यभिचरितव्रतं। सतां सत्पुरुषाणां। केनोद्दिष्टमुपदिष्टं। न केनापीत्यर्थः। स्वतस्सिद्धत्वादिति भावः। अत्रासिधारावन्निशितत्वादसिधारासञ्चारवत्सावधानेनैकाग्रतया

विधेयत्वाद्वा असिधाराव्रतं । यद्वा असिधारया व्यवहरतां व्रतं वीरव्रतमित्यर्थः ।
अथवा ।

"युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् ।
अन्तर्निवृत्तसङ्गस्स्यादसिधाराव्रतं स्मृतम् ॥"

इत्युक्तमित्यवधेयम् । शिखरिणीवृत्तम् ॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ५८

व्या—प्रदानमिति—प्रच्छन्नं प्रदानं गुप्तदानं । न तु प्रकाशं । तथाभूतस्य दानस्य महाफलश्रवणादिति भावः । गृहं निजमन्दिरं प्रत्युपगते सति अर्थिनीति शेषः । सम्भ्रमविधिः प्रत्युत्थानाभिवादनादिसत्वरव्यापारविधानं च न तु वैमुख्यं । तस्यैव शास्त्रोदिताचारत्वादिति भावः । प्रियं तदभीष्टं कृत्वा । मौनं तूष्णींभावश्चापरिकीर्तनमिति यावत् । न तु प्रकटनं । कृतस्य परिकीर्तनं । 'नदत्त्वा परिकीर्तये' दिति मनुस्मरणादिति भावः । सदसि राजविद्वत्सभायामुपकृतेः । कथनं परोपकारप्रख्यापनं च । न तु तत्र तूष्णींशीलत्वम् । अन्यथा कृतघ्नत्वप्रसङ्गादिति भावः । लक्ष्म्यां सम्पत्त्यामनुत्सेको गर्वराहित्यं । न तु मदान्धत्वं । 'सम्पत्स्वनुत्सेकिन' इत्युक्तत्वादिति भावः । निरभिभवसाराः । अनिन्दापराः परकथाः पुरुषान्तरप्रसङ्गाश्च । न तु गर्हणपराः । 'आत्मप्रशंसां परगर्हामपि च वर्जये दि'त्यादिस्मरणात् । सतामित्यादि । वृत्तं च पूर्ववत् ॥

सन्तप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्त्रस्थितं दृश्यते ।
अन्तस्सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमजुषामेवंविधा वृत्तयः ॥ ५९

व्या—अथाधममध्यमोत्तमवृत्तिमाह । सन्तप्तायसीति—सन्तप्तायसि सम्यगग्नितप्तायःपिण्डे संस्थितस्य । निक्षिप्तस्येत्यर्थः । पयसो जलस्य नामाऽपि नाम,

धेयमात्रमपि । न श्रूयते मूलतो ऽनस्तमेव भवतीत्यर्थः । स्वरूपदर्शनं तु किमुवक्तव्यमिति भावः । तदेव पयः । नळिनीपत्त्रस्थितं पद्मिनीपत्त्रगतं सत् । मुक्ताकारतया मौक्तिकरूपेण । दृश्यते न तु मौक्तिकत्वेनेत्यर्थः । तदेव पयः । अन्तस्सागरे सागरान्तराळे । अन्तरित्यव्ययं । या शुक्तिः मुक्तास्फोटः - तस्याः । मध्ये उदरे । पतितं सत् । मौक्तिकं जायते मौक्तिकत्वेन परिणमतीत्यर्थः 'ज्ञाजनोर्जे'ति जादेशः मुक्तेव मौक्तिकमिति विग्रहः * विनयादित्वात्स्वार्थे ठक्; अतः प्रायेण भूम्ना अधममध्यमोत्तमजुषां निकृष्टसाधारणोत्कृष्टाश्रयाणां श्रितवतामेवंविधाः नाशाश्रवणादिरूपा वृत्तयो व्यापारा भवन्तीति यथाक्रममन्वयाद्यथासंख्यालङ्कारः । अतः महदाश्रय एव कर्तव्यः । 'नीचाश्रयो न कर्तव्यः कर्तव्यो महदाश्रय' इति वचनात् । अत्रोत्तममध्यमाधमा इति लोकप्रसिद्धोद्देशक्रमः कविना न विवक्षित इति ज्ञेयम् ॥

शार्दूलविक्रीडितम् ॥

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कळत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत् त्रयं जगति पुण्यकृतो लभन्ते ॥ ६०

व्या—अथ सत्पुत्रकळत्रमित्रसम्पत्तिः पुण्यकृदधीनेत्याह । य इति—यः पुत्रस्सुचरितैः वाक्यकरणादिसदाचारैः । पितरं । प्रीणयेत् सन्तोषयेत् * प्रीञ् तर्पण' इत्यस्माद्धातोश्चौरादिकाण्णिचि लिङ् * 'धूञ् प्रीञोर्नुग्वक्तव्य' इति नुगागमः । स पुत्रः 'पुन्नाम्नो नरकात्त्रायत' इति व्युत्पन्न इति पुत्रशब्दवाच्यः न तूत्पन्नमात्रः ॥

"जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् ।
गयायां पिण्डदानेन त्रिभिः पुत्रस्य पुत्रता ॥"

इति स्मरणात् ॥

यद्भर्तुः पत्युः । हितमिच्छति भयभक्तिभ्यां हिताचरणतत्परं भवति । तदेव । कळत्रं भार्या । न तु यादृच्छिकं । 'पतिभक्तिरता साध्वी शान्ता सा सत्यभाषिणी' ति पतिव्रताधर्मत्वात् । नि—'कळत्रं श्रोणिभार्ययोरि 'त्यमरः ॥

यदापदि अनर्थसङ्कटे । सुखे सम्पदि च । समक्रियमविषमाचारमित्यर्थः । तुल्यवृत्ति । तदेव मित्रं सुहृत् । नत्वापत्सम्पदोः त्यागानुवर्तनतत्परम्—

'आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः'। इति वक्ष्यमाणत्वादेतत्त्रयमुक्तसत्पुत्रादित्रितयं । जगति भुवि । पुण्यकृतो धन्याः लभन्ते प्राप्नुवन्ति । न त्वकृतसुकृता इत्यर्थः । एवंविधत्रितयलाभस्य महापुण्यफलत्वादिति भावः । वसन्ततिलकावृत्तम् ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः
स्वार्थान्संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्जनान्दुःखयन्तः
सन्तस्साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥

व्या—अथ सतां तावदसाधारणगरिमास्पदत्वेनाशेषोपादेयत्वमाह । नम्रत्वेनेति—नम्रत्वेन प्रह्वत्वेनैवोन्नमन्त औन्नत्यं प्राप्नुवन्तस्तथा भावस्यैवौन्नत्यहेतुत्वादिति भावः। परेषां। गुणकथनैस्सद्गुणवर्णनैः । स्वान् स्वकीयान् । गुणान् सौजन्यादीन् । ख्यापयन्तः प्रकटयन्तः । नत्वात्मप्रशंसया । तादृग्भावस्यैव निजगुणप्रकटनहेतुत्वादिति भावः । परार्थे परप्रयोजननिर्वहणे । विततौ विस्तृतौ पृथुतरौ । महत्तरौ चारम्भयत्नौ प्रारम्भोत्साहौ च येषां ते तथोक्तास्सन्त एव । स्वार्थान् स्वप्रयोजनानि । सम्पादयन्तो निष्पादयन्तः । परकार्यसाधनपुरस्कारेणैवात्मीयकार्यसाधनतत्पराः न त्वेकान्तत इत्यर्थः । 'तथाभूतत्वस्यैवात्मार्थकत्वादिति भावः । क्षान्त्या सहनशीलत्वेनैवाक्षेपेण निन्दया । रूक्षाक्षराणि परुषवाक्यानि तैः मुखराणि वाचालानि । मुखानि एषां तान् परुषभाषिण इत्यर्थः । दुर्जनान् खलान् । दुःखयन्तः सन्तापयन्तः । नतूच्चण्डतया । तथाविधत्वस्यैव तेषां हृच्छल्यप्रायत्वादिति भावः । अत एव साश्चर्यचर्या अत्यन्ताश्चर्यकरचरित्रास्सन्तस्सत्पुरुषाः ; जगति लोके । बहुमताः बहुमानितास्सन्तः । कस्यवा पुंसो नाभ्यर्चनीयाः न पूजनीया इति काकुः; सर्वेषामप्यभ्यर्चनीया एवेत्यर्थः । स्रग्धरावृत्तम् । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेय'मिति लक्षणात् ॥

इति नीतिशतके सुजनपद्धतिस्सम्पूर्णा ॥

॥ परोपकारपद्धतिः ॥

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धतास्सत्पुरुषास्समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ६२

व्या—अथ सौजन्यस्य परोपकारफलकत्वात्तन्निरूपणानन्तरं परोपकारपद्धतिं वर्णयति—भवन्तीति । तरवः पनसरसालादिवृक्षाः । फलोद्गमैः फलभारैः । नम्राः अवनता भवन्ति घना मेघाः । नवाम्बुभिर्नूतनोदकैरुपलक्षितास्सन्तः । दूरविलम्बिनस्सर्वत्र । प्रवर्षणार्थमन्तरिक्षसञ्चारिणो भवन्ति । सत्पुरुषास्समृद्धिभिरुपलक्षिता अपि अनुद्धता अनुचण्डा भवन्ति । तीक्ष्णस्वभावा न भवन्तीत्यर्थः । 'अनर्थिता' इति पाठे । अयाचिता भवन्ति । याच्ञां विनैव परहितमाचरन्तीत्यर्थः तथा एष उक्तनिजनम्रत्वादिव्यवहारः । परोपकारिणां परहिताचरणतत्पराणां । स्वभावो निसर्गसिद्ध एव न त्वाहार्यक इत्यर्थः; महान्तो हि परोपकारार्थक्लेशं क्लेशत्वेन न गणयन्ति । तेषां तस्य स्वाभाव्यादिति भावः; तदुक्तं—

"परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः ।
परोपकाराय चरन्ति गावः परोपकारार्थमिदं शरीरम्" ॥

इति । अर्थान्तरन्यासोऽलङ्कारः । वंशस्थवृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥ ६३

व्या—अथैषां मुख्यमण्डनसम्पत्तिमाह । श्रोत्रमिति—करुणापराणां दयालूनां । परोपकारिणामित्यर्थः । श्रोत्रं कर्णः । नि । 'कर्णशब्दग्रहौ श्रोत्र'मित्यमरः श्रुतेन धर्मशास्त्रश्रवणेनैव । विभाति प्रकाशते । कुण्डलेन सुवर्णमणिमयकर्णभूषणेन न तु विभाति; पाणिर्हस्तः । दानेन सत्पात्रत्यागेन । विभाति । कङ्कणेन कनकवलयेन न तु विभाति; कायो देहः । परोपकारेण परेषां हिताचरणेन विभाति; चन्दनेन कस्तूरीघनसारविमिश्रितपटीरपङ्कलेपेन तु न विभाति;

महात्मनां श्रवणादिकमेव स्वाभाविकं मण्डनं न त्वन्यत् । तस्य नश्वरत्वादिति भावः ॥

वृत्तमुपजातिः ॥

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ ६४

व्या—यदुक्त 'मनर्थितास्सत्पुरुषा' इत्यादि तदेव प्रपञ्चयति—पद्माकरमिति। दिनं दिवसं करोतीति दिनकरस्सूर्यः * 'कृञोहेत्वि'त्यादिना टप्रत्ययः। अभ्यर्थितो न भवतीति नाभ्यर्थितः । अयाचितस्सन्नित्यर्थः * नशब्दस्य सुप्सुपेति समासः। पद्माकरं पद्मवनं । विकचं विकसितं । करोति । नि । 'प्रफुल्लोत्फुल्लसम्फुल्लव्याकोचविकचस्फुटाः। फुल्लश्चैते विकसिते' इत्यमरः। तथा चन्द्रोऽपि कैरवचक्रवाळं कुमुदषण्डं । नि । 'सिते कुमुदकैरव' इत्यमरः । विकासयति व्याकोचयति। तथा जलधरो वारिवाहोऽपि * पचाद्यच् । नाभ्यर्थितस्सन्नेव । जलं ददाति प्रवर्षति । तथाहि सन्तस्सत्पुरुषाः स्वयमयाचिता एवेत्यर्थः । परेषां हिते हिताचरणे विहिताभियोगाः कृताभिनिवेशाः । न त्ववबोधिता इत्यर्थः; अतो युक्तमेवं हिताचरणमेतेषामिति भवः ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। 'सामान्यविशेषकार्यकारणभावाभ्यां सदृष्टप्रकृतकार्यसमर्थनमर्थान्तरन्यास' इति सर्वस्वसूत्रम् ॥

वसन्ततिलकावृत्तम् ॥

एते सत्पुरुषाः परार्थघटकास्स्वार्थान् परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ६५

व्या—अथ व्यापारतारतम्येन पुरुषाणामुत्तमादिभेदमाह—एते इति । ये पुमांसः । स्वार्थान् स्वप्रयोजनानि । नि 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'

त्यभिधानात् । परित्यज्य त्यक्त्वा । परार्थघटकाः परप्रयोजनसङ्घटनशीलाः । एते । सत्पुरुषाः पुरुषोत्तमाः । सत्त्वस्य तेनैवाभिव्यक्तत्वादिति भावः । ये तु स्वार्थस्याविरोधेनावैषम्येण ; स्वार्थनिर्वाहतत्परत्वेनैवेत्यर्थः । परार्थं परप्रयोजननिर्वाहार्थम् । उद्यमभृत उद्योगभाजः । ते सामान्यास्साधारणाः मध्यमपुरुषा इत्यर्थः । ये तु । स्वार्थाय स्वार्थनिष्पत्त्यर्थं । परहितं । निघ्नन्ति नाशयन्ति । तेऽमी । मानुषराक्षसाः मानुषशब्दवाच्याः राक्षसाः । तथा क्रूराचारतत्परत्वात्पुरुषाधमा इत्यर्थः । ये तु निरर्थकं निष्फलं प्रयोजननिष्पत्तिराहित्येनापीति यावत् । परहितं घ्नन्ति । ते पुमांसः । के वा कथं भूता वा । न जानीमहे । उक्तत्रिविधपुरुषविलक्षणत्वात्तान् ज्ञातुं न शक्नुम इत्यर्थः । अत एव परमनीचा इत्यर्थः । उक्तपक्षेषु यः श्रेयान् तत्पक्षाश्रयणं कर्तव्यमायुष्मतेति भावः ॥

शार्दूलविक्रीडितम् ॥

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ६६

व्या—अथ सन्मित्रलक्षणमाह । पापात्पापाचरणान्निवारयति निवर्तयति । धर्मोपदेशेन दुष्कर्मप्रवृत्तेः विरमयतीत्यर्थः ॥ * 'जुगुप्साविरामे' त्यादिना पञ्चमी । हिताय योजयते सत्कर्माचरणाय प्रवर्तयतीत्यर्थः । यद्वा श्रेयस्सङ्ग्रहार्थं प्रोत्साहयतीत्यर्थः । गुह्यं गोप्यं । निगूहत्याच्छादयति । न कुत्रापि प्रकटयतीत्यर्थः । गुणान् सौशील्यादिसद्गुणान् । प्रकटीकरोति प्रख्यापयति । न तु निगूहतीत्यर्थः । आपद्गतमतिसङ्कटस्थमपि । न जहाति न त्यजति । 'तन्मित्रमापदि सुखे च समक्रियं य'दित्युक्तत्वादिति भावः । काले व्यसनादिसमये । ददाति वाञ्छितं दिशति । तदिदं पापनिवारणादिकं सर्वं । सन्तस्सत्पुरुषास्सन्मित्रस्याकैतवसुहृदः । लक्षणं स्वरूपं प्रवदन्ति ॥

वसन्ततिलकावृत्तम् ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।

गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं

युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ ६७

व्या—पुनस्तदेव क्षीरनीरदृष्टान्तेन वर्णयति—क्षीरेणेति । क्षीरेण कर्त्रा आत्मानमुपगतं प्राप्तं । यदुदकं जलं तस्मै स्वात्ममिश्रितजलायेत्यर्थः । पुरा पूर्वं । ते प्रसिद्धाः । अखिलास्समस्ताश्च । गुणा निजमाधुर्यधावल्यादिगुणाः दत्ताः हि वितीर्णाः खलु । स्वगुणप्रदानद्वारा मैत्री सम्पादितेत्यर्थः । अतः क्षीरोत्तापं । क्षीरस्य श्रपणार्थमग्नौ निक्षिप्तस्य दुग्धस्य । उत्तापं सन्तापमवेक्ष्य । तेन क्षीरमिश्रितेन । पयसा उदकेन । नि 'पयः क्षीरं पयोऽम्बु च' त्यमरः । स्वात्मा स्वशरीरं । कृशानौ वह्नौ हुतः मित्रसन्तापासहनात्संशोषित इत्यर्थः । ततस्तत् क्षीरं कर्तृ मित्रस्य जलस्यापदं संशोषरूपां विपत्तिं । दृष्ट्वा । पावकं वह्निं । गन्तुमुन्मनः उद्युक्तमभवत् * 'उत्क उन्मना' इति निपातनात्साधुः । जलसंशोषणे क्षीराणां बहिर्निर्गमनसम्भवादिति भावः । तदनन्तरं तेन जलेन । युक्तं मिश्रितं सत् । शाम्यति प्रशान्तं भवति * 'शमामष्टाना' मिति दीर्घः । तथाहि । सतां मैत्री सौहार्दम् । व्याख्याता मैत्री । ईदृशी पुनः परस्परव्यसनासहनशीला खलु । अत एतद्युक्तमिति भावः ॥

अत्र स्वभावसिद्धस्य क्षीरनीरव्यवहारस्य परस्परसन्तापदर्शनहेतुकत्वेनोत्प्रेक्षणात्क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा । सा चोक्तार्थान्तरन्यासनिर्व्यूढेत्यनयोः विजातीयसङ्करः । वृत्तमुक्तम् ॥

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-

मितश्च शरणार्थिनां शिखरिणां गणाः शेरते ।

इतोऽपि बडबानलः सह समस्तसंवर्तकै-

रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ६८

व्या—अथैतन्माहात्म्यमाह । इत इति । इतोऽस्मिन्प्रदेशे । केशवो विष्णुः कुक्षिस्थाखिलभुवन इति भावः । स्वपिति योगानुसन्धानेन निद्राति * 'रुदादिभ्यस्सार्वधातुके' इतीडागमः । इतोऽस्मिन्प्रदेशे । तस्य केशवस्य इमे तदीयाः * त्यदादित्वात् वृद्धाच्छः । ये द्विषो हिरण्याक्षरावणादयस्तेषां । कुलं समूहस्तिष्ठतीति शेषः । इतस्ततोऽन्यस्मिन् प्रदेशेऽपि । शरणार्थिनो रक्षणाभिलाषिणः ।

नि। 'शरणं गृहरक्षित्रो' रित्यभिधानात् । तेषां शिखरिणां मैनाकादिपर्वतानां गणाश्च। शेरते स्वपन्ति * 'शीङो रुडि'ति रुडागमः । इतस्ततस्मादप्यन्यस्मिन् प्रदेशे । समस्ता ये संवर्तकाः प्रळयकालप्रवर्षिमेघविशेषाः । अत एव पुष्कलावर्तकसंज्ञया च व्यवह्रियन्ते । तैस्सह । बडबानलोऽपि वसति । तस्मात् । सिन्धोस्समुद्रस्य । वपुश्शरीरं । विततं केशवाधारत्वेन विस्तृतं । ऊर्जितं बडबानलाश्रयत्वेऽप्यतिवर्धिष्णु । भरसहं पर्वतभरणेन भारोद्वहनक्षमं च । अहो अप्रमेयानुभावत्वेनात्यन्ताश्चर्यमित्यर्थः ॥

अत्र लक्षयोजनपरिच्छिन्नस्य समुद्रस्यापरिच्छिन्नकेशवाद्यत्रलारत्वकथनादधिकप्रभेदोऽलङ्कारः । "आधाराधेययोरानुरूप्याभावोऽधिको मत" इति लक्षणात् ॥

पृथ्वीवृत्तम् ॥

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
सञ्जातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ ६९

व्या—अथ परहिताचरणपराकाष्ठया द्वयोरेव जन्म सफलं न त्वन्येषामित्याह—जात इति । किंबहुना । अवतारेष्वपीत्यध्याहार्यम्—एकः केवलस्स कूर्मः आदिकूर्मावतार एव जातः जन्मलाभवानित्यर्थः । कुतः ? येन कूर्मेण । पृथुर्महान् । यो भुवनभरश्चतुर्दश विष्टपभारस्तस्मै तद्वहनार्थमित्यर्थः । पृथु विपुलमिति पृथक्पदं वा । पृष्ठं निजकूर्परतलमर्पितं दत्तं। निरन्तरमधःप्रदेशे स्थित्वा दुर्भरभुवनभारेण जनितः क्लेशस्सोढ इत्यर्थः । तथा ध्रुवस्यौत्तानपादेर्जन्म । श्लाघ्यं सकललोकप्रशस्तम्। कुतः ? यत्र यस्मिन् ध्रुवे ; तेजस्विनां ग्रहनक्षत्रादीनां। चक्रं शिंशुमाराख्यं ग्रहनक्षत्रमण्डलं वा। नियमितं नियुक्तं सङ्क्रमति पर्यावर्तते। तत्रभवान्भगवदनुग्रहवशात्सकललोकोन्नतमेरुशिखरशिखामणिर्ध्रुवः स्वायत्तत्वेन तेजस्विचक्रं प्रवर्तयतीति श्रीविष्णुपुराणभागवतादिकथाऽनुसन्धेया ; ततः किमत आह—परहितकरणे परोपकाराचरणविषये । व्यर्थो निरर्थः अप्रयोजक इति यावत् । यः पक्षः - सञ्जातो येषां ते सञ्जातव्यर्थपक्षाः। न तु सञ्जातपरिहितकरण-समर्थपक्षा इत्यर्थः ॥ * सापेक्षत्वेऽपि गमकत्वात्समासः । अपरे उक्ताभ्यामन्ये

जन्तवः प्राणिनः। नैच्योद्भावनार्थं कोऽयं जन्तुशब्दप्रयोगः। उपरिष्ठान्न ध्रुववदु- परिभागेऽपि वर्तमाना न भवन्तीत्यर्थः। अधश्च न। कूर्मवदधस्ताद्वा वर्तमाना अपि न भवन्तीत्यर्थः। किं तु उदुम्बरः जन्तुफलाख्यवृक्षविशेषः। तस्य फलमुदु- म्बरं-नि॥ 'उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धक' इत्यमरः॥ * 'फले लुगि'ति लुक्। ब्रह्माण्डमुदुम्बरं तस्यान्तः अन्तराळे। अव्ययमेतत्। ये मशका- स्तैस्तुल्यं तद्वत् * 'तेन तुल्यं क्रियाचेद्वति'रिति वतिप्रत्ययः। जाता उत्पन्नाश्च ते नष्टाश्च जातनष्टाश्च भवन्तीति शेषः॥ * स्नातानुलिप्तवत्पूर्वकालसमासः। यतो न तैः किमपि साधितमतो मशकवन्निष्फलजन्मभिः किमन्यैरिति भावः॥

रूपकोपमयोस्सङ्करः॥ स्रग्धरावृत्तम्॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं माकृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम्।
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम्॥ ७०

व्या—अथ विधेयलोकं सम्बोधयंस्सदाचारं शिक्षयति। तृष्णामिति—हे जने- त्यध्याहार्यं सर्वत्रापि। मध्यमपुरुषप्रयोगसम्भवात्। अलभ्येषु परधनेषु लाभाभि- लाषस्तृष्णा। तां छिन्धि वैराग्यशस्त्रेण विदारय—अन्यथा अनेकाशापाशनि- बद्धत्वेन क्लेशभागित्वं स्यादिति भावः। परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः क्षमा-तां-भज सेवस्व। अन्यथा उग्रभावेन कार्यहानिस्स्यादिति भावः। मदं विद्याजनितदर्पम्। जहि विज्ञानेन विनाशय। अन्यथा विवेकशून्यतया अकार्य- करणप्रवृत्तौ अनर्थप्राप्तिस्स्यादिति भावः। पापे पापकर्माचरणे रतिं प्रीतिम्। माकृथाः अज्ञानेन माकार्षीः। किं तु 'धर्मं चरे' त्याद्युपदेशवचनेन सत्कर्मा- चरणे। एव रतिं कुर्वित्यर्थः। अन्यथा निरयपातस्स्यादिति भावः॥ * करोतिर्लुङि थासि 'न माङ्योग' इत्यट् प्रतिषेधः। सत्यं सूनृतम्। ब्रूहि 'सत्यं वदे'ति वचनेन यथार्थमेव वचनं वदेत्यर्थः। अन्यथा 'नानृतात्पातकं पर' मिति न्याया- दविवेकित्वप्रसक्तिस्स्यादिति भावः। साधुपदवीं सन्मार्गमनुयाहि धर्मशास्त्रानु- रोधेनानुसर। अन्यथोत्पथप्रतिपन्नत्वे वचनीयतादिदोषापत्तिस्स्यादिति भावः। विद्वज्जनं उपदेशेन कृतार्थीकरणशीलं पण्डितमण्डलम्। सेवस्व

"यस्तु पर्यटते देशान् यस्तु सेवेत पण्डितान्।
तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि॥"

इति वचनाद्बुद्धिवैशद्यार्थं शुश्रूषस्व । अन्यथा बुद्ध्यवैशद्याशिक्षितत्वाद्यभियोगस्स्यादिति भावः । मान्यान् पूज्यान्मानय यथार्हं पूजय । अन्यथा

"समासमाभ्यां विषमसमे पूज्ये" इति गौतमसूत्रात् ।

"अपूज्या यत्र पूज्यन्ते पूज्याश्चैवावमानिताः ।
अयशो महदाप्नोति धनाद्धर्माच्च हीयते ॥"

इत्यादिस्मरणाच्च अन्यथा अकीर्तिस्सुकृतधनहीयमानस्वरूपाऽश्रेयःप्राप्तिस्स्यादिति भावः । किं बहुना । विद्विषश्शत्रूनपि किमुतान्यान् । अनुनय - 'समश्शत्रौ च मित्रे च' इति भगवद्वचनात्प्रसादय । अन्यथा रन्ध्रेषु पातयिष्यतीति भावः । प्रश्रयं गुर्वाचार्यादिषु नम्रत्वं । विनयमिति यावत् । प्रख्यापय 'गुरौ नम्रते' त्युक्तत्वात्प्रकटय । अन्यथा दुर्विनीतत्वापवादप्रसङ्गस्स्यादिति भावः ; कीर्तिं पालय । जन्मसाफल्यार्थं कीर्तिनिर्वहणे प्रयत्नं कुर्वित्यर्थः । अन्यथा 'क्षितितले किं जन्म कीर्तिं विने'ति वचनाज्जीवन्मृतत्वापत्तिस्स्यादिति भावः । दुःखिते सञ्जातदुःखेषु भूतेष्वित्यर्थः ॥ * तारकादित्वादितच् । जातावेकवचनम् । दयां दुःखप्रहाणेच्छालक्षणाम् । कुरु 'दुःखिषु करुणे'ति शास्त्रानुरोधाद्विधेहि । अन्यथा चित्तशुद्ध्यसम्भवादिति भावः । एतत्सर्वं तृष्णाच्छेदादिकम् । सतां सज्जनानां चेष्टितं व्यापारः । यदि सौजन्ययशःकामी तदैवं प्रवर्तस्व अन्यथा पुरुषार्थलाभासम्भवादिति भावः ॥

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७१

व्या—ईदृशा विरळा एवेति निगमयति—मनसीति । मनसि वचसि काये मनोवाक्कायेषु । पुण्यमेव । पीयूषममृतं । तेन पूर्णाः । करणत्रितयेनापि सत्कर्माचरणतत्परा इत्यर्थः ॥ * नि—'पीयूषममृतं सुधे'त्यमरः । त्रयाणां भुवनानां समाहारस्त्रिभुवनं । लक्षणया त्रिभुवनस्थजनानित्यर्थः ॥ * 'तद्धितार्थे'त्यादिना समासः ॥ * पात्रादित्वान्न स्त्रीत्वम् । उपकारश्रेणिभिर्हिताचरणपरम्पराभिः । प्रीणयन्तस्सन्तोषयन्तः ॥ * 'प्रीञ्प्रीणने' इति धातोश्चोरादिकाण्णिचि शतृप्रत्ययः ॥ * 'धूञ्प्रीञोर्नुग्वक्तव्य' इति नुगागमः । परेषां गुणपरमाणूनल्पल

गुणानपीत्यर्थः । यतोऽणुर्नास्ति स परमाणुरित्याहुः । पर्वतीकृत्य महत्तरान् कृत्वा * अभूततद्भावे च्विः ॥ * 'ऊर्यादिच्विडाचश्चे'ति गतिसंज्ञायां * 'कुगतिप्रादय' इति समासः । नित्यं ख्यापयन्तः निरन्तरं प्रशंसन्तः । तथा निजहृदि स्वान्तःकरण एव विकसन्तः सन्तुष्यन्तस्सन्तः सत्पुरुषाः । कियन्तः कतिपये विरळा एवेत्यर्थः । सन्ति । न तु सान्द्राः एतादृशगुणसम्पत्तेरसाधारण्यादिति भावः । 'निजहृदि विकसन्तस्सन्ति सन्तः कियन्त' इत्येव पाठः । तथाचोक्तं । 'सौजन्यामृतसिन्धव' इत्यादि ॥ मालिनीवृत्तम् ॥

इति नीतिशतके परोपकारपद्धतिस्सम्पूर्णा ॥

---

## ॥ धैर्यपद्धतिः ॥

रत्नैर्महाब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ ७२

व्या—रत्नैरिति । देवा अमराः । महाब्धेः क्षीरार्णवस्य सम्बन्धिभिः । रत्नैः कौस्तुभादिमणिभिः । नि—'रत्नं श्रेष्ठे मणावपी'ति विश्वः । यद्वा । रत्नैः । नि— 'जातौ जातौ च यच्छ्रेष्ठं तद्रत्नमभिधीयत' इति वचनात् । ऐरावतोच्चैश्श्रवःकल्पवृक्षादिश्रेष्ठजातीयवस्तुभिः हेतुभिः । न तुतुषुस्तुष्टिं न प्रापुः । मथनसमय इति शेषः । तथा । बिभ्यत्यस्मादिति भीमः * 'भीमादयोऽपादान' इत्यपादानार्थे भियः मप्रत्यय औणादिकः । तथाभूतं यद्विषं कालकूटाख्यं । तेन हेतुना तस्मादित्यर्थः । न भीतिं भेजिरे न प्रापुरिति धैर्यातिशयोक्तिः * विषेणेत्यत्र 'भीत्रार्थानां भयहेतु'रित्यपादाने पञ्चम्या भाव्यं । तथाऽपि हेतुत्वमात्रविवक्षयाऽयं निर्देश इति मन्तव्यम् । किं तु सुधाममृतं । विना * 'पृथग्विने'त्यादिना द्वितीया । विराममवसानं । न प्रययुः मथनादिति शेषः । सुधोत्पत्तिं विना न विरता इत्यर्थः । अनेन शीलसम्पत्तिरुक्ता । तथाहि । धीरा मनस्विनो निश्चितार्थात् प्रतिज्ञातार्थान्न विरमन्ति विरामं न प्राप्नुवन्ति । किं त्वाफलोदयं प्रयतन्त एवेत्यर्थः ॥ अतो धैर्यशीलसम्पन्नानां देवानामपीदं युक्तमेवेति भावः ॥ * 'जुगुप्सा विरामे'त्यादिना पञ्चमी * 'व्याङ्परिभ्यो रम' इति परस्मैपदम् ॥

अर्थान्तरन्यासोऽलङ्कारः ॥

वृत्तमुपजातिः ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ।
विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ ७३

व्या—उक्तमेवार्थं नीचातिवृत्तिकथनद्वारा द्रढयति—प्रारभ्यत इति । नीचैरधमैः विघ्नेभ्योऽन्तरायेभ्यो । यद्भयं तेन हेतुना । न प्रारभ्यते खलु । नोपक्रम्यते कार्यमिति शेषः । नि ॥ 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । मध्याः मध्यमास्तु । कार्यं प्रारभ्योपक्रम्य । विघ्नैर्निहता विह्वलीकृतास्सन्तो विरमन्ति । विरता भवन्तीत्यर्थः । उत्तमाः उत्कृष्टाः । गुणा धैर्यशीलादयो । येषां ते तथोक्ताः पुरुषश्रेष्ठास्तु विघ्नैर्मुहुर्मुहुः पौनःपुन्येन । प्रतिहन्यमानाः बम्भज्यमाना अपि । प्रारब्धमुपक्रान्तं कर्म । न परित्यजन्ति; अतः कालकूटवडवानलादिविघ्नाद्युपहतत्वेऽपि उक्तगुणसम्पन्नतया देवानां सुधोत्पत्तिपर्यन्तं मथनं युक्तमिति श्लोकद्वयस्यापि तात्पर्यम् । अत्र प्रकरणे कुत्रचिद्धैर्यस्य कुत्रचिच्छीलस्य कुत्रचिदुभयस्यापि प्राधान्यनिर्देश इति द्रष्टव्यम् 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु'-त्युक्तलक्षणं धैर्यं । शीलं तु नियतकुलोचितसत्स्वभाव इति विवेकः । 'शीलं स्वभावे सद्वृत्ता' वित्यभिधानात् ॥

वसन्ततिलकावृत्तम् ॥

क्वचित्पृथ्वीशय्यः क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ७४

व्या—अथोक्तगुणसम्पन्नस्य कृच्छ्राकृच्छ्रयोर्दुःखसुखापरिगणनया कार्यसाधनत्वमाह—क्वचिदिति । क्वचित्कुत्रचिद्देशे काले वा । पृथ्वी शय्या यस्य स तथोक्तः । कठिनतरस्थण्डिलशयनोऽपीत्यर्थः ॥ क्वचिच्च । पर्यङ्के हंसतूलिकातल्पे । शयनं स्वापो । यस्य स तथोक्तः । मृदुलतरशय्योऽपीत्यर्थः । नि—'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वयासमाः'—'स्वापनिद्रा शयनं स्वाप' इत्युभयत्राऽप्यमरः ।

क्वचिच्छाक एवाहारो यस्य नीरसाहारोऽपीत्यर्थः । क्वचिच्च । शाल्योदने शाल्यन्ने । रुचिः स्वादो यस्य स तथोक्तः । षड्रसोपेतमृष्टान्नभोजनसन्तुष्टोऽपीत्यर्थः । क्वचित्कन्थां जीर्णवस्त्रशकलनिर्मिताच्छादनं धारयतीति कन्थाधार्यपि । क्वचिच्च दिव्याम्बरधरः कनत्कनकपीताम्बरधरोऽपि । कार्यार्थी कार्यनिष्पत्त्यभिलाषी । अर्थः अभिलाषः । तद्वानर्थीति विग्रहः ॥ *'कृत्तद्धितवृत्तिर्बलीयसी'ति महाभाष्ये । मनस्वी महामनाः धीरः ॥ * प्रशंसायामिनिः । पृथ्वीशय्यादिना दुःखं च न गणयति । पर्यङ्कशयनादिना सुखं च न गणयति । किन्तु सुखदुःखयोस्समानावस्थयैव कार्यसाधनतत्परो भवतीत्यर्थः ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ७५

व्या—अथ धीराः लोकनिन्दास्तुतिप्राप्ता अपि न्यायमार्गान्न भ्रश्यन्तीत्याह—निन्दन्त्विति । नीतिनिपुणा नयविशारदाः । निन्दन्तु कथञ्चिद्दूषयन्तु । वा यदि अथवा । स्तुवन्तु भूषयन्तु वा । लक्ष्मीस्सम्पत् । समाविशतु प्राप्नोतु । वा, उत । यथेष्टं निरर्गळम् । गच्छतु वा । अद्यैवेदानीमेव । मरणं निधनमस्तु वा । उत युगान्तरे कल्पान्तरे वाऽस्तु । तथाऽपि । धीरा धैर्यशालिनः न्याय्यान्न्यायादनपेतात्पथो मार्गात् । पदमेकपादविन्यासमात्रमपि । न-प्रविचलन्ति न भ्रश्यन्ति । तेषां न्यायमार्गापरित्याग एव परमार्थो । न निन्दास्तुत्यादिरिति भावः ॥

वसन्ततिलकावृत्तम् ॥

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशै
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ७६

व्या—ननु को धीरस्स वा किं साधयतीत्याशङ्क्याह—कान्तेति । यस्य चित्तं । कान्ताकटाक्षाः—

" यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम् ।
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥ "

इति भावप्रकाशोक्तलक्षणलक्षितकामिन्यपाङ्गालोकनानि । त एव विशिखा बाणा न लुनन्ति न भिन्दन्ति न सम्मोहयन्तीति यावत् तथा कोपकृशानुतापः क्रोधाग्निसन्तापश्च । न निर्दहति न व्याकुलयति । तथा भूयो बलवत्तराः विषयाः शब्दादीन्द्रियार्थाश्च । लोभः परस्वापहरणे प्रयत्नः । एतेन कामादयोऽप्युपलक्ष्यन्ते । तथा च । लोभा एव पाशा रज्जवश्च बन्धनहेतुत्वात्तेषां पाशत्वारोपणं । न तर्षन्ति तृष्णायुक्तं न कुर्वन्ति कर्षन्तीति पाठे न स्वायत्तीकुर्वन्तीत्यर्थः । स धीरः । कृत्स्नमशेषं । लोकत्रयं स्वर्गादिलोकत्रितयमपि जयत्यात्माधीनं करोतीत्यर्थः । तस्य न किंचिदप्यसाध्यमिति भावः । वृत्तं पूर्ववत् ॥

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव ॥ ७७

व्या—धैर्यगुणन्यक्कारः कथंचिदपि न युज्यत इति सदृष्टान्तमाह । कदर्थितस्येति—कुत्सितोऽर्थः कदर्थः * ' कोः कत्तत्पुरुषेऽची 'ति कुशब्दस्य कदादेशः । कदर्थीकृतः कदर्थितः तस्य नीचैः । कृतस्यापि सतः धैर्येण वृत्तिर्वर्तनं यस्य तस्य सम्बन्धि धैर्यमेव गुणः । प्रमार्ष्टुमधःकर्तुं । न शक्यते; तत्र दृष्टान्तः । अधोमुखस्य कृतस्यावाङ्मुखीकृतस्यापि सतो । वह्नेश्शिखा ज्वाला । कदाचिदेव कदाचिदप्यधो न यान्ति । किं तूर्ध्वमेव प्रसरतीत्यर्थः । तद्वद्धीरस्यापि धैर्यगुण इति विवेकः ॥

उपजातिवृत्तम् ॥

वरं शृङ्गोत्सङ्गाद्गुरुशिखरिणः क्वापि विषमे
पतित्वाऽयं कायः कठिनदृषदन्ते विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ७८

व्या—मरणोद्योगो वा वरं न तु शीलविलयः इत्याह । वरमिति—अयं कायो देहः गुरुशिखरिणोऽत्युन्नतपर्वतस्य शृङ्गोत्सङ्गाच्छृङ्गोपरिभागात्क्वापि कस्मिंश्चिद्विषमे विकटे । कठिनदृषदन्ते कर्कशपाषाणान्तराले । पतित्वा विगलितं

शकलितश्चेद्वरं मनाक्प्रियं । तथा हस्तस्तीक्ष्णदशने विषानलोग्रदंष्ट्रे । फणिपतेः । मुखे वक्त्रे । न्यस्तश्चेद्वरं । तथा वह्नौ पातोऽग्निप्रवेशोऽपि । वरं । किं तु शीलविलयस्स्वभावत्यागः । कृतश्चेन्न वरम् । मनाक्प्रियमपि । न भवतीत्यर्थः । प्राणप्रयासेऽपि शीलं न त्याज्यमिति तात्पर्यम् । 'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिय' इत्यमरः ॥

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतरं शीलं समुन्मीलति ॥ ७९

व्या—नन्वेवं शीलस्यात्यन्तावश्यकत्वमुक्तं । तद्भावे को लाभ इत्याशङ्कायामाह—वह्निरिति । तस्य पुंसः । वह्निर्दाहकोऽपीति भावः । जलायते जलमिवाचरति । तद्वच्छीतलो भवतीत्यर्थः * 'कर्तुः क्यङ्सलोपश्चे'ति क्यङ् * 'अकृत्सार्वधातुकयो' रिति दीर्घः । एवं सर्वत्र प्रयोज्यम् । जलनिधिर्दुस्तरोऽपीति भावः । कुल्यायते अल्पनदीवाचरति । तस्येति सर्वत्रान्वयोऽवगन्तव्यः । तत्क्षणात्तस्मिन्नेव क्षणे । न तु विलम्बेनेत्यर्थः । मेरुः स्वल्पशिलायते अल्पदृषदिवाचरति । मृगपतिस्सिंहः । हिंस्रोऽपीति भावः । सद्यः कुरङ्गायते हरिण इवाचरति । व्यालस्सर्पः । विषोरगभीषणोऽपीति भावः । माल्यगुणायते पुष्पस्रगिवाचरति । विषमेव रसो द्रवः प्राणप्रयासहेतुरिति भावः । पीयूषवर्षायते अमृतवृष्टिरिवाचरति । कस्येत्याकाङ्क्षायामाह । यस्य पुंसोऽङ्गेऽखिललोकानामशेषजनानां । वल्लभतरमत्यन्तमनोहरं । शीलं सत्स्वभावः । समुन्मीलति समुल्लसति । तस्येति सम्बन्धः । शीलसम्पन्नस्य दुःखहेतवोऽपि सुखहेतव एव भवन्ति । अयमेव परमलाभ इति भावः ॥

अत्र क्यङर्थादौपम्यप्रतीतेरुपमाभेदः—

" इवादिलोपे द्विविधे णमुलि क्यचि च क्यङि ।
तथा वाक्ये समासे च सप्तधैषा प्रकीर्तिता ॥ " इति

(एषा उपमेत्यर्थः)

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तस्सन्त सन्तप्यन्ते न लोकेषु ॥ ८०

व्या—अथैषां कदाऽपि सन्तापो न प्रवर्तत इत्याह—छिन्न इति । तरुः छिन्नस्सन्नपि । पुनः । रोहत्युद्गच्छति । चन्द्रः । क्षीणः कृष्णपक्षे दिनक्रमेण कृशस्सन्नपि । पुनरुपचीयते प्रवर्धते इत्येवं । विमृशन्तो मनस्यनुसन्दधानास्सन्तः शीलसंपन्ना लोकेषु बन्धुजनेषु । विश्लथेषु विह्वलेषु सत्स्वपि । न सन्तप्यन्ते । किं तु तरुचन्द्रदृष्टान्तेनाभिवृद्धिमाशंसन्त एव सन्तीत्यर्थः ॥ आर्याभेदः ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८१

व्या—शीलमेवाशेषभूषणमित्याह । ऐश्वर्यस्येति—ऐश्वर्यस्य स्वाम्यस्य । सुजनता विभूषणं । न तु दौर्जन्यम् । शौर्यस्य विक्रान्तत्वस्य वाक्संयमो वाङ्नियमो विभूषणं न त्वसम्बद्धप्रलापित्वम् । ज्ञानस्य कर्तव्याकर्तव्यविवेकस्यात्मविषयकस्य वा । उपशमो विषयोपरतिः । विभूषणं न तु लोलुपत्वम् । श्रुतस्य शास्त्रस्य । विनयो विभूषणं । न तु गर्वोद्रिक्तता । वित्तस्य पात्रे व्ययः सत्पात्रे प्रतिपत्तिः । विभूषणं । न तु विटनटादिषु । तपसश्चान्द्रायणादेरक्रोधः क्रोधराहित्यं * क्वचित्प्रसज्यप्रतिषेधेऽपि नञ् समास इष्यते । विभूषणं न तु कोपशीलत्वम् । प्रभवितुः समर्थस्य क्षमा सहिष्णुत्वम् । विभूषणं न तु चण्डता । धर्मस्य सत्पात्रदानस्य । निर्व्याजता व्याजराहित्यं । विभूषणं । न तु द्रव्यनाशदुःखं । तथा सर्वकारणं ऐश्वर्यादिसमस्तनिदानमिदं पूर्वोपवर्णितमेव शीलं । सर्वेषामपि सर्वपुंसां । परं सौजन्याद्यपेक्षयाऽप्युत्कृष्टं । भूषणमलङ्कारः ॥ अतस्सर्वथाऽपि शीलमेवाश्रयणीयमिति तात्पर्यम् ॥

इति नीतिशतके धैर्यपद्धतिस्सम्पूर्णा ॥

---

## ॥ दैवपद्धतिः ॥

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वारणः ।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः सङ्गरे
तद्व्यक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥ ८२

व्या—अथ धैर्यशीलयोरपि दैवायत्तत्वात्तन्निरूपणानन्तरं दैवपद्धतिं निरूपयति—नेतेति। यस्य बलिभिदः। नेता शिक्षकः हिताहितोपदेशकर्ता। बृहतां वाचां पतिर्बृहस्पतिः। न तु यः कश्चित् * 'तद्बृहतोः करपत्योश्चोरदेवतयोस्सुट्तलोपश्चे'ति सुडागमतलोपौ। प्रहरणं आयुधं प्रहारसाधनं तु । वज्रं वज्रायुधं। पर्वतपक्षच्छेदनेऽप्यकुण्ठितमिति भावः। न तु यत्किञ्चिदयोमयं। सैनिकास्सुराः न तु दुर्बललौकिकाः। दुर्गं गुप्तिस्थानं । स्वर्गः स्वर्गलोकः । न तु मृत्पाषाणादिनिर्मितम् । अनुग्रहः परिपालनतात्पर्यं । हरेः खलु सकललोकाधीश्वरस्य विष्णोः । तस्यावरजभावेनावतीर्णत्वादिति भावः। न तु क्षुद्रदेवतायाः। वारणो गजः ऐरावतः न तु यः कश्चित्कलभः । इत्यनेन प्रकारेण स बलभिदिन्द्रः। आश्चर्यबलान्वितोऽसाधारणत्वादद्भुतकरशक्तिसहितोऽपि । सङ्गरे रणे । परैर्दानवैर्भग्नो विदारितः । तत्तस्मात्कारणाद्व्यक्तं स्फुटं यथा तथा । दैवमेव। शरणं रक्षकं । न तु पुरुषस्य कर्म पौरुषं * 'हायनान्तयुवादिभ्योऽणि'ति युवादित्वादण्। नि। 'पौरुषं पुरुषस्योक्ते भावे कर्मणि तेजसी'ति विश्वः। पौरुषं पुरुषकारं। धिग्धिक् पौनः पुन्येन निन्द्यमित्यर्थः। वृथा व्यर्थमप्रयोजकत्वादिति भावः। धिग्धिगिति * 'नित्यवीप्सयो'रित्याभीक्ष्ण्ये द्विरुक्तिः। तद्योगात्पौरुषमिति द्वितीया; अतः पौरुषस्याकिञ्चित्करत्वमेवाश्रयणीयमिति भावः॥

'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं प्रधानमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः?'

इत्यादिवचनस्य अयमेव दत्तजलाञ्जलिरिति वेदितव्यम्॥

अत्र साभिप्रायविशेषणत्वात्परिकरालङ्कारः - "साभिप्रायविशेषणं परिकर" इति॥

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि परं वृद्धौ क्षये कारणम् ॥ ८३

व्या—अथ बन्धमोक्षयोर्हानिवृद्ध्योश्चापि दैवमेव कारणमित्याह—भग्नेति। आखुर्मूषकः कर्ता । नक्तं रात्रौ। विवरं बिलं । करण्डस्यैवेति भावः । कृत्वा। भग्नाशस्य भुग्नत्वाद्भग्नमनोरथस्य । करण्डे पिण्डिकायां । पिण्डिता पुञ्जीकृता। तनुर्यस्य तथोक्तस्य । विहारप्रसारशून्यतयाऽतिकृच्छ्रदशामापन्नस्येत्यर्थः। क्षुधा बुभुक्षाव्यसनेन। म्लानेन्द्रियस्य विनष्टेन्द्रियपाटवस्य । भोगिनः सर्पस्य । मुखे स्वयमेव दैववशान्निपतितः । ततोऽसौ भोगी । तत्पिशितेन मूषकमांसेन। तृप्तस्सन् । तेनैव पथा विवरेण। सत्वरं शीघ्रं । यातः बहिर्निर्गत्य पलायितः हे जना इति शेषः। स्वस्थाः स्थिरचित्तास्सन्तः । तिष्ठत कुतः वृद्धौ क्षये च दैवमेव। परमुत्कृष्टं कारणं हि नत्वन्यदतो मूषकभोगिदृष्टान्तेन स्वस्थैर्भाव्यं । न तु वृथा पौरुषैरिति भावः॥

यथा कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ८४

व्या—अथ दैवायतिकतदन्ययोरवस्थामाह । यथेति—आर्यो दैवायतिकः। पतन्नपि कुतश्चित्कारणान्नीचैर्भवन्नपि कन्दुकपातेन दृष्टान्तेन यथोत्पतत्युच्छ्र्यं प्राप्नोति । तथा तद्वदेव अनार्यः मृत्पिण्डपतनं यथा सान्द्रमृत्कबलमिव 'इववद्वायथाशब्दा' विति दण्ड्याचार्यानुशासनात् । पतति निलीनो भवतीत्यर्थः॥

खर्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
गच्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः ॥ ८५

व्या—दैवोपहतस्य न कुत्रापि सुखप्राप्तिरित्याह—खर्वाट इति । खर्वाटः स्वभावलुप्तलोमशिरस्कः । मस्तके निजशिरसि । दिवसेश्वरस्य सूर्यस्य । किरणैस्सन्तापिते सति । अनातपमातपशून्यं देशं प्रति । द्रुतगतिः शीघ्रगमनः । गच्छन् । ताळस्य ताळवृक्षस्य । मूलं गतः ताळाधस्तात्तिष्ठति । तत्र ताळमूलेऽपि । पतता वृन्ताद्गळता महाफलेन पृथुलतरफलेन । अस्य खर्वाटस्य शिरः । स्वशिरश्शब्देन पटपटायमानेन सहितम् । सशब्दं यथा तथा । भग्नं विदळितं; ननु कुत एतदित्याशङ्क्य दैवप्रातिकूल्यादित्याह—दैवहतको दैवोपहतः दैवानुग्रहशून्य इत्यर्थः । यत्र यस्मिन् देशे गच्छति । यं देशमुद्दिश्य गच्छति । तत्र तमुद्दिश्यैवापद उपद्रवा अपि । प्रायो भूम्ना । यान्ति तदेतन्मशकभयाद्ग्रामं विहाय गच्छतोऽरण्ये व्याघ्रग्रहणमभूदित्यर्थः ॥

शार्दूलविक्रीडितम् ॥

गजभुजङ्गविहङ्गमबन्धनं शशिदिवाकरयोर्ग्रहपीडनम् ।
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥

व्या—अतो दैवमेव बलीय इति मम मतिः प्रवर्तत इत्याह—गजेति । अयं स्पष्टार्थः ॥ यतोऽत्यन्तदुर्ग्रहाणां गजादीनां बन्धनं । जगत्प्रकाशकयोस्सूर्याचन्द्रमसोः राहुग्रहपीडनं । मतिमतां प्राज्ञानां । दरिद्रतामकिञ्चनत्वं च । विलोक्य दृष्ट्वाऽपि । अहो आश्चर्यम्; अतस्सर्वस्यापि दैवबलीयस्त्वं मन्ये । दैवमेव मूलमिति तात्पर्यम् ॥ द्रुतविलम्बितम् ॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ८७

व्या—एवं चेद्विधेरप्यज्ञता स्यादित्याशयेनाह—सृजतीति । विधिरशेषगुणाकरं सकलसद्गुणाश्रयं भुवोऽलङ्करणं मण्डनं । पुरुषरत्नं पुरुषश्रेष्ठं । सृजति तावन्निर्माति खलु । ततः किमत आह—तदपि तथाऽपि सृजन्नपीत्यर्थः । तत्पुरुषरत्नं क्षणभङ्गि क्षणमात्रेण भङ्गुरं नश्वरमित्यर्थः । करोति चेत् । विधेरपण्डितता मौढ्यमहह कष्टमतिकृच्छ्रमिति विषादातिशयाभिद्योतकमहहेति; करोति चेत्तत्पाण्डित्यमेवेत्यर्थः । तथातादृक्पुरुषरत्नस्य क्षणभङ्गित्वेनैव निर्माणात्तु अपण्डित एव विधिरिति परमरहस्यम् ॥

द्रुतविलम्बितम् ॥

अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शम्भुमूर्ध्नोऽवतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ८८

व्या—कथञ्चिदपि दैवयोगो न लङ्घ्य इत्याह—अयमिति । अयं परिदृश्यमानश्चन्द्रः । अमृतस्य । निधानं स्थानमपि ओषधीनां सञ्जीविन्यादीनाम् । नायको नेताऽपि । शपभिषजा नक्षत्रेण । शतेन भिषग्भिर्वैद्यैश्चानुयातोऽनुसृतोऽपि । किं बहुना शम्भोस्सकललोकक्षेमङ्करस्य शङ्करस्य । मूर्ध्नोऽवतंसश्शिरोभूषणमप्येनमुक्तविशेषणविशिष्टं शशाङ्कं राजयक्ष्मा क्षयरोगो न विरहयति न त्यजति खलु । अतो हतविधेर्नष्टदैवस्य । परिपाको नियोगः केन वा पुंसा । लङ्घनीयो न केनाऽपीत्यर्थः; हतेति निर्वेदानुसन्धानार्थकः । राजयक्ष्मेत्यत्र राज्ञश्चन्द्रस्य यक्ष्मा । राजा चासौ यक्ष्मेति वा विग्रहः यथाह बाहटः—

"अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजयक्ष्मा क्षयोऽशेषरोगराडिति च स्मृतः ॥"

प्रियसख विपदण्डघातप्रपातपरम्परा-
परिचयबले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-
द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ८९

व्या—मनोनियन्ताऽप्ययमेवेति सखायं सम्बोधयति—प्रिय इति । प्रियश्चासौ सखा च प्रियसखः । तस्य सम्बुद्धिः । हे प्रियसख * 'राजाहस्सखिभ्यष्टच्' खलश्शठोऽयं विधिः ॥ प्रगल्भकुलालेन तुल्यं प्रगल्भकुलालवत् प्रौढकुम्भकारइवेत्यर्थः * 'तेन तुल्यं क्रियाचेद्वतिरि' ति वतिः । मनो मदीयचित्तम् । मृदं मृत्तिकामिव । बलात्सामर्थ्यात्पिण्डीकृत्य कपालीकृत्य । विपदः आपदः । दण्डाघाताः मुद्गरघट्टनानीव । तेषां । प्रपातानां च या परम्परा पौनःपुन्येनावृत्तिः । तस्याः यः परिचयस्संस्तरो निबिडावयवपरस्परसन्निवेशश्च स एव । बलं दार्ढ्यं यस्य तस्मिन् । चिन्ताचक्रे चिन्ताचक्रमिव तस्मिन्निधाय भ्रमयति ।

अत्र भ्रमणे । किं विधास्यति किं करिष्यति वा । नो जानीमः । कुलालस्तु घटं करिष्यत्ययं तु किं विधास्यति न जानीम इत्यर्थः ॥

विरम विरमायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे ।
अयि जड विधे कल्पापायेऽप्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ ९०

व्या—एवमापत्परम्पराचरणे महद्धैर्यध्वंसो भविष्यतीति न मन्तव्यमिति विधिमलक्षीकृत्योपालभते—विरमेति । अयीति प्रश्ने । नि ॥ 'अयिप्रश्नानुनयो' रिति विश्वः । जडेति मान्द्ये । हे विधे दैवेति सम्बोधनद्वयम् । अस्माद्दुरध्यवसायतो दुराग्रहाद्य आयासस्तस्माद्विरम विरम आभीक्ष्ण्येन विरतो भव * 'नित्यवीप्सयोरि'त्याभीक्ष्ण्ये द्विरुक्तिः । कोऽसावायास इत्याशङ्कायामाह । विपदित्वत्कृतापदि । महतां महात्मनां धैर्यध्वंसं धीरत्वह्रासमीक्षितुमीहसे काङ्क्षसे । यत् त्वमस्मादायासादिति सम्बन्धः ॥ तस्यात्यन्तासम्भावितत्वात्त्वदायासस्यैवावशिष्टत्वादिति भावः । कुतो वाऽसम्भावितत्वमित्याशङ्क्य दृष्टान्तमुखेन द्रढयति—कल्पापाये कल्पान्तेऽपि अतिसङ्कटेऽपि किमुतान्यदेति भावः ॥ अपेताः विनष्टाः । निजक्रमाः स्वमर्यादाः । येषां ते तथोक्तास्सन्तः । एते कुलशिखरिणो महेन्द्रादिसप्तकुलाचला वा । जलराशयस्सप्तसमुद्रा वा क्षुद्रा नीचाः न खलु । किं त्वत्यक्तमर्यादा एव वर्तन्ते । अतः दृष्टान्तेन धीरधैर्यध्वंसनस्यातिदुष्करत्वात्त्वदायास एवावशिष्टो न तु फललाभ इति भावः ॥

"महेन्द्रो मलयस्सह्यस्सानुमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥"
"लवणेक्षुसुरासर्पिर्दधिक्षीरजलार्णवाः ॥" इति ॥

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महानैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ ९१

व्या—तथापि दैवमेव शरणमित्याह—दैवेनेति । प्रभुणा समर्थेन । जगति लोके । यस्य पुंसो । यद्वस्तु । प्रमाणीकृतं निर्दिष्टं । तद्वस्तु तस्योपनमेत सङ्गच्छेत् । महानाश्रयो । मनागीषदपि । नैवकारणं न साधनं हि । बहुफलप्राप्ताविति शेषः । तत्र दृष्टान्तः । सर्वाशापरिपूरके । सकललोकमनोरथपरिपूरके । सकलदिगन्तव्याप्तफलके वा । जलधरेऽम्बुवाहे * पचाद्यच् । अहन्यहनि प्रत्यहम् * 'अव्ययं विभक्ती'त्यादिनाऽव्ययीभावः । अह्नश्च 'नपुंसकवदन्यतरस्या' मिति समासान्तः । वर्षति सत्यपि । चातकस्य स्तोककपक्षिणो । मुखे चञ्चूपुटे । सूक्ष्मा अणव एव । तथाऽपि द्वौ वा त्रयो वा द्वित्रा एव * 'संख्ययाऽव्ययासन्न' त्यादिना बहुव्रीहिः * 'बहुव्रीहौ संख्येये डजबहुगणा' दिति डच् प्रत्ययः । पयोबिन्दवो जलकणाः । पतन्ति । न त्वाश्रयमहत्तया बहुजललाभस्तत्रापि दैवस्यैव नियन्तृत्वादिति भावः । तस्मात्सर्वथा दैवमेव शरणमिति तात्पर्यम् । नि ॥ 'स्तोककश्चातकस्समा' इत्यमरः ॥

इति नीतिशतके दैवपद्धतिस्सम्पूर्णा ॥

---

॥ कर्मपद्धतिः ॥

नमस्यामो देवान्नतु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं किममरगणैः किं च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९२

व्या—यदुक्तं दैवेन प्रभुणेत्यादिसन्दर्भेण दैवस्यैवात्यन्तावश्यकत्वं । तस्यापि कर्मनियम्यत्वेनास्वातन्त्र्यादित्याशयेन दैवपद्धतिनिरूपणानन्तर्येण कर्मपद्धतिं निरूपयिष्यन्स्तत्रापि सर्वदेवनियामकत्वेन विधेस्तन्नियामकत्वेन कर्मणः प्राबल्यमिति परम्परामनुविदधाति—नमस्याम इति । देवानिन्द्रादीन्नमस्यामोऽभिवादयामः । न त्वेकान्ततयैतेषामेवाभिवाद्यत्वमेतन्नियामकस्य कस्यचिद्विधेः विद्यमानत्वात् । सोऽप्यभिवाद्य एवेत्याशयेनाह—ते देवा अपि हतो यो विधिर्ब्रह्मा तस्य । वशगा ननु नियम्याः खलु । अतो विधिरपि वन्द्यः न त्वस्यापि स्वातन्त्र्यमित्याह—सोऽपि विधिरपि । प्रतिनियतं यत्कर्मणः एकं फलं तद्ददातीति तथोक्तः यत्फलं

कर्मणः प्रतिनियतं तत्प्रदो न तु स्वतन्त्र इत्यर्थः। तथाच फलं कर्मायत्तं यदि कर्माधीनं चेदपरैः देवैः किं? विधिना च किं? न किञ्चिदपीत्यर्थः। तस्यैव फलदानस्वाम्यादिति भावः। तत्तस्मात्कर्मभ्यो ज्योतिष्टोमतपोदानादिरूपेभ्यो नमः। यतः विधिरपि। येभ्यः कर्मभ्यो न प्रभवति न समर्थो भवति। स्वातन्त्र्येण प्रवृत्तेरभावादिति भावः॥

अत्र पूर्वपूर्वस्योत्तरोत्तरं प्रत्युत्कर्षावहत्वान्मालादीपकाख्योऽलङ्कारः। तल्लक्षणं तूक्तम्॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे॥ ९३

व्या—यदुक्तं 'विधिरपि न येभ्यः प्रभवती'ति तत्प्रपञ्चयति—ब्रह्मेति। येन कर्मणा कर्ता ब्रह्मा चतुर्मुखो ब्रह्माण्डमेव भाण्डं। तस्योदरे। कुलालेन कुम्भकारेण तुल्यं कुलालवन्नियमितः विविधवस्तु निर्माणकर्मत्वेन नियमितो नियोजितः। येन विष्णुः कुक्षिस्थाखिलभुवनोऽपि। महासङ्कटेऽतिकृच्छ्रतरे। दशावतारा एव गहनमरण्यानी तत्र क्षिप्तो निक्षिप्तः। येन कर्मणा रुद्रो मृत्युञ्जयोऽपीति भावः। कपालं ब्रह्मशिर एव पाणिपुटकं करतलस्थभिक्षाहरणोचितभाजनं तत्र। भिक्षाटनं सेवते। कपालस्थभिक्षान्नं भुङ्क्त इत्यर्थः। किं च येन सूर्योऽपि सकललोकप्रकाशकोऽपीति भावः। नियमित इति शेषः। गगनेऽन्तरिक्षे नित्यमेव न तु क्षणमात्रमपि विश्रमावकाश इति भावः। भ्राम्यति परिवर्तते * 'वाभ्राशे' त्यादिना विकल्पात् श्यन्प्रत्ययः। तस्मै सकलनियन्त्रे कर्मणे नमः। तथाभूतस्यैवाभिवादनौचित्यादिति भावः॥

या साधूंश्च खलान् करोति विदुषो मूर्खान् हितान् द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात्।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा माकृथाः॥ ९४

व्या—एवं श्लोकद्वयेन सकलनियामकत्वकथनपूर्वकमभिवादनीयत्वोपयोगात्स्वयमभिवाद्य सम्प्रति बहुश्रेयोहेतुत्वात्तस्योपादेयतामाह—येति। या सत्क्रिया खलांश्च दुर्जनानपि साधून्करोति। मूर्खानज्ञानिनोऽपि विदुषः पण्डितान् करोति। द्वेषिणोऽपि हितांत्सुहृदः करोति। परोक्षमतीन्द्रियमपि वस्तु प्रत्यक्षमिन्द्रियगोचरं कुरुते। तथा हालाहलं विषमपि तत्क्षणात्सद्य एवामृतं करोति। तादृक्सामर्थ्यसम्भवादिति भावः। अतः हे साधो सज्जननिपुणेति वा। 'साधुस्समर्थो निपुणो वे'ति काशिकायाम्। वाञ्छितमभिलषितं। फलं भोक्तुमिच्छसि चेदिति शेषः। भगवतीं तां। सत्क्रियां सत्कर्माराधय। तस्याः अशेषफलदायकत्वादिति भावः। किं तु व्यसनैर्विपुलेष्वापद्धूयिष्टेषु। गुणेषु। रजस्तमःप्रभृतिषु वृथा व्यर्थमास्थामासक्तिं। माकृथा माविधेहि। तस्याः क्लेशैकफलकत्वादिति भावः। करोतेर्लुङ् * 'न माङ्योग' इत्यट् प्रतिषेधः॥

अत्र खलादीनां साधुत्वादिकरणादशक्यवस्तुकरणरूपो विशेषालङ्कारः॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्वला
लक्ष्मीरित्यनुभूयते चिरमनुस्यूते शुभे कर्मणि।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झडिति भ्रश्यद्दिशोऽदृश्यताम् ॥९५

व्या—वृद्धिहान्योरप्येतन्मूलकत्वमेवेत्याह—शुभ्रमिति। चिरं चिरकालमारभ्यानुस्यूतेऽनुवर्तमानेऽपि * 'षिवु तन्तुसन्ताने' इति धातोः कर्तरि क्तः * 'च्छ्वोश्शूडनुनासिके चे'ति ऊठि यणादेशः। शुभे कर्मणि पुराकृतविशेषे सम्भवति सतीत्यर्थः। शुभ्रं सद्म सौधादिकं। सविभ्रमास्सविलासाः। युवतयस्तरुण्यः। श्वेतातपत्रेणैकश्वेतच्छत्रेणोज्वला। लक्ष्मी राज्यश्रीरित्येतदखिलमित्यर्थः। अनुभूयतेऽनुभुज्यते। जन्मान्तरीयफलहेतुत्वात्तस्येति भावः। विच्छिन्ने शुभकर्मणि विनष्टे सति। नितरामतिशयेन। अनङ्गकलहो रतिरणस्स एव क्रीडा केलिस्तया हेतुना त्रुटन् भिदुरस्तन्तुर्यस्य तत्तथोक्तं * शेषे कप्प्रत्ययः। मुक्ताजालमिव भ्रश्यत्सत्। सद्मादिकमिति शेषः। झडिति द्राग्दिशः प्रयाति 'यत्र यत्र सितं गेहं तत्र तत्र विनश्यती'ति न्यायादिति भावः। दृश्यतां विलोक्यतामित्यर्थः॥ अन्वयव्यतिरेकाभ्यां वृद्धिहान्योरस्यैव कारणत्वं द्रष्टव्यमिति भावः॥

गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १६

व्या—अथैषामाचरणप्रकारमाह—गुणवदिति । गुणवद्गुणयुक्तमगुणवद्गुणरहितं वा । यत्कार्यजातं तत्कुर्वताऽनुतिष्ठताऽनेन । पण्डितेन परिज्ञात्रा । परिणतिः परिपाकावस्था । यत्नतः अतिप्रयत्नेन । सावधानेनेति यावत् । अवधार्याऽनुसन्धेया । यत्नत एव कर्मजातमारब्धव्यम् । समालोच्य परिणतिपर्यन्तमित्यर्थः । अन्यथाऽनर्थमाह—अतिरभसकृतानां सहसाऽनुष्ठितानां । कर्मणां गुणवतां वेति शेषः । आविपत्तेर्निष्पत्तिपर्यन्तं * विकल्पादाङोऽसमासः । विपूर्वात्पद्यतेर्निष्पत्त्यर्थत्वमुपसर्गवशाद्धातूनामनेकार्थत्वादित्यवगन्तव्यम् । हृदयदाही मनस्सन्तापकारी । शल्यतुल्यः शल्यप्रायो । विपाकः परिपाकदशा । भवति; अतस्सावधानेनैव कर्मजातमारम्भणीयं । तथाभूतस्यैव चित्तसमाधायकत्वादिति भावः ॥

स्थाल्यां वैदूर्यमय्यां पचति तिलखलं चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य हेतोः ।
छित्त्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तात्
प्राप्येमां कर्मभूमिं न भजति मनुजो यस्तपो मन्दभाग्यः ॥

व्या—अतस्सत्कर्मानिनुष्ठातुः दुर्मेधस्कतामाह—स्थाल्यामिति । स मनुजः इह लोके । विदूरात्प्रभवति वैदूर्यं वालवायजमणिः । नि 'वैदूर्यं वालवायजमि'त्यमरः * 'विदूराञ्ञ्यः" इति ञ्यप्रत्ययः । अत्र विदूरशब्दो वालवायस्यादेशः पर्यायो वा तत्रोपचरितो वा । तेन 'वालवायाद्रिरेरसौ प्रभवति । स विदूरनगरात् । तत्र संस्कृत' इत्याक्षेपः प्रत्युक्तः ॥

"वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥ "

वैदूर्यमय्यां वैदूर्यमणिविकारायां * विकारार्थे मयट् । स्थाल्यां पात्रे । चान्दनैश्चन्दनतरुसम्बन्धिभिरिन्धनौघैः काष्ठभारैः । तिलखलं तिलपिष्टं । पचति । तथा । सौवर्णैस्सुवर्णविकारैर्लाङ्गलाग्रैर्हलमुखैरर्कतूलस्य हेतोरर्काख्यवृक्षतूलार्थमित्यर्थः * 'षष्ठी हेतुप्रयोग' इति षष्ठी । वसुधां भुवं । विलिखति कर्षति । तथा कर्पूरखण्डान् कर्पूरकदलीकाण्डांश्छित्वा । कोद्रवाणां कोरदूषाख्यसस्यविशेषाणां । नि ॥ 'कोरदूषस्तु कोद्रवः' इत्यमरः । समन्तात्सर्वतोऽधिकमित्यर्थः - वृतिमावरणं । कुरुते । कोऽसावीदृशो दुर्भग इत्याशङ्कायामाह—इमां कर्मभूमिं कर्माचरणयोग्यभूमिं । प्राप्य यो मन्दभाग्यो निर्भाग्यो मनुजस्तपश्चान्द्रायणादिकर्म । न भजति न सेवते । इति सम्बन्धः; वैदूर्यपात्रे तिलपिष्टपचनादिप्रायं कर्मभुव्यस्यां तपोऽननुष्ठानमित्यर्थः । अतस्सर्वथा तत्कर्मानुष्ठेयं श्रेयस्कामेनेति तात्पर्यम् ॥

अत्र यस्तपो न भजति स तिलखलं पचतीत्यादि विशिष्टभजनपचनाद्योर्वाक्यार्थयोर्निर्दिष्टैकत्वासम्भवात्सादृश्यलक्षणायामसम्भवद्वस्तुसम्बन्धो वाक्यार्थवृत्तिनिदर्शनाभेद इत्येतत्सर्वं मूर्खपद्धतौ व्याख्यातमितीहोपरम्यते ॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९८

व्या—पुण्यविशेष एव फलं न त्वन्यदित्याह—नेति । आकृतिराकारसम्पत्तिरेव । नैव फलति फलकारणं न भवतीत्यर्थः । कुलं सद्वंशो वा । नैव फलति । शीलं सत्स्वभावो वा न फलति । विद्याऽपि वेदवेदाङ्गात्मिकाऽपि । नैव फलति । यत्नकृता प्रयत्नानुष्ठिता । सेवा राजादिपरिचर्या च । न फलति किं तु पूर्वतपसा पुराकृतसुकृतेन सञ्चितानि सम्पादितानि । पुरुषस्य सम्बन्धीनि । भाग्यानि । वृक्षायथा । वृक्षाइवेत्यर्थः—'इव वद्वा यथा शब्दा' विति दण्ड्याचार्यानुशासनात् । काले परिपाकसमय एव फलन्ति खलु । तपोजनितभाग्यविशेषव्यतिरेकेण फलजनकं न किञ्चिदस्तीत्यर्थः ॥

